तु ॥ कुवेरायवैश्रवणाय ॥ महाराजायनमः ॥ ॐस्वस्ति ॥ साम्राज्यं
भौज्यंस्वाराज्यंवैराज्यं पारमेष्ठ्यंराज्यंमाहाराज्यमाधिपत्यमयं समंत
पर्यायीस्यात्सार्वभौमःसार्वायुषआंतादापरार्धात् ॥ पृथिव्यैसमुद्रपर्यंता
याएकराळिति ॥ तदप्येषःश्लोकोभिगीतोमरुतःपरिवेष्टारोमरुत्तस्या
वसन्गृहे ॥ आविक्षितस्यंकामप्रेर्विश्वेदेवाःसभासदइति ॥ योवैतांब्र
ह्मणोवेदअमृतेनामृतांपुरीं ॥ तस्मैब्रह्मचब्रह्माचआयुःकीर्तिंप्रजांद
दुः ॥ ॐविश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोवाहुरुतविश्वतस्पात् ॥
संवाहुभ्यांधमतिसंपतत्रैर्द्यावाभूमींजनयन्देवएकः ॥ संसृष्टंधनमुभयं
समाकृतमस्मभ्यंदत्तांवरुणश्चमन्युः ॥ भियंदधानाहृदयेषुशत्रवःपरा
जितासोअपनिलयंतां ॥ त्रिनयनमभिमुखनिःसृतामिमांयइहपठेत्प्र
यतश्चसदाद्विजः ॥ सभवतिधनधान्यपशुपुत्रकीर्तिमान्नमतुलंचसुखंस

मश्नुतेदिवीतिदिवीति ॥ॐनारायणायविद्महेवासुदेवायधीमहि ॥ तंनो विष्णुःप्रचोदयात् ॥ तत्पुरुषायविद्महे महादेवायधीमहि ॥ तंनोरुद्रः प्रचोदयात् ॥ एकदंतायविद्महे वक्रतुंडायधीमहि ॥ तंनोदंतीप्रचोदयात् ॥ भास्करायविद्महे महद्युतिकरायधीमहि ॥ तंनोआदित्यः प्रचोदयात् ॥ महालक्ष्मीचविद्महे विष्णुपत्नीचधीमहि ॥ तंनोलक्ष्मीः प्रचोदयात् ॥

इदं पुस्तकं मुंबय्यां पांडुरंग जावजी इत्येतैः स्वीये "निर्णयसागर" स्वयंत्रे मुद्रयित्वा प्रकाशितं । शाके १८४५. सन १९२३.

Publisher Pandurang Jawaji
Printer Ramchandra Yesu Shedge } at the Nirnaya-sagar Press, 23 Kolbhat Lane, Bombay

॥ इति ऋग्वेदीयदेवे मंत्राः समाप्ताः ॥

# ॥ अथ हिरण्यकेशीया त्रिकालसंध्या ॥

मूल्यं १ आणकः.

## अथ विभूतिधारणमंत्रः ॥

श्रीगणेशाय नमः ॥ (हस्ते भस्म जलं च गृहीत्वा) ॐ ईशानःसर्वविद्या
नामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुस
दाशिवोम् ॥ शिरसि॥ ॐतत्पुरुषायविद्महेमहादेवायधीमहि॥तन्नोरुद्रः
प्रचोदयात् ॥ मुखे॥ ॐ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यः
सर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥ हृदये॥ ॐ वामदेवायनमोज्येष्ठा-
यनमःश्रेष्ठायनमोरुद्रायनमःकालायनमःकलविकरणायनमोबलविक-
रणायनमोबलायनमोबलप्रमथनायनमःसर्वभूतदमनायनमोमनोन्म-
नायनमः ॥ गुह्ये॥ ॐसद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः॥भवे-
भवेनातिभवेभवस्वमांभवोद्भवायनमः॥पादयोः॥ ॐअग्निरिति भस्म॥
ॐवायुरिति भस्म॥ॐजलमिति भस्म॥ॐस्थलमिति भस्म॥ॐव्योमेति

भस्म॥ॐसर्वंᳪहवाइदं भस्म॥ॐमानस्तोकेतनयेमानआयुषिमानोगोपुमानोअश्वेंपुरीरिषः॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतोनमसाविधेमते॥इतिसर्वांगेभस्मविलेप्य॥आचम्य॥केशवादिप्राणायामंकृत्वा॥

## ॥ अथ प्रातःसंध्या ॥

श्रीगणेशाय नमः ॥ ( प्राङ्मुख उदङ्मुखो वा कुशासने ऊर्णासने वोपविश्य ) ( उत्तमा तारकोपेता मध्यमा लुप्ततारका ॥ अधमा सूर्यसहिता प्रातःसंध्या त्रिधा मता ) ॥ ॐ केशवाय नमः ॥ नारायणाय नमः ॥ माधवाय नमः ॥ गोविंदाय नमः ॥ विष्णवे नमः ॥ मधुसूदनाय नमः ॥ त्रिविक्रमाय नमः ॥ वामनाय नमः ॥ श्रीधराय नमः ॥ हृषीकेशाय नमः ॥ पद्मनाभाय नमः ॥ दामोदराय नमः ॥ संकर्षणाय नमः ॥ वासुदेवाय नमः ॥ प्रद्युम्नाय नमः ॥ अनिरुद्धाय नमः ॥

पुरुषोत्तमाय नमः ॥ अधोक्षजाय नमः ॥ नारसिंहायनमः ॥ अच्युताय नमः ॥ जनार्दनाय नमः ॥ उपेंद्राय नमः ॥ हरये नमः ॥ श्रीकृष्णाय नमः ॥ ॐ भूः ॥ ॐ भुवः ॥ ॐ सुवः ॥ ॐ महः ॥ ॐ जनः ॥ ॐ तपः ॥ ॐ सत्यम् ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ॐ आपोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ प्रातःसंध्या ॥ कुमारी ॥ रक्ता ॥ रक्तवर्णा ॥ रक्तवस्त्रा ॥ रक्तगंधानुलेपना ॥ रक्तमाल्या ॥ हंसवाहना ब्रह्मदैवत्या ॥ गार्हपत्याग्न्युपस्थाना ॥ ऋग्वेदसंहिता ॥ प्रथमा ब्रह्मसंध्या वेदवतीनाम्नी ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःसंध्योपास्तिकरिष्ये ॥ आयातुवरदादेवीअक्षरंब्रह्मसंमितम् ॥ गायत्रींछंदसांमातेदं ब्रह्मजुषस्वमे ॥ यदह्नात्कुरुतेपापंतदह्नात्प्रतिमुच्यते ॥ यद्रात्रियात्कुरुतेपा-

पंतद्रात्रियात्प्रतिमुच्यते॥ सर्ववर्णेमहादेविसंध्याविद्येसरस्वति ॥ अज-
रेअमरेदेविसर्वदेविनमोस्तुते ॥ ॐ ओजोसिसहोसिबलमसिभ्राजो-
सिदेवानांधामनामासिविश्वमसिविश्वायुःसर्वमसिसर्वायुरभिभूरोंगाय
त्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि छंदर्षीनावा
हयामि श्रियमावाहयामि ह्रियमावाहयामि ॥ ॐआपोहिष्ठामयोभुव-
स्तानऊर्जेदधातन ॥ महेरणायचक्षसे॥योवःशिवतमोरसस्तस्यभाजय-
तेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥
आपोजनयथाचनः॥ आपोवाइद॑ंसर्वंविश्वाभूतान्यापःप्राणावाआपः
पशवआपोन्नमापोमृतमापःसम्राडापोविराडापः स्वराडापश्छंदा॑ंस्या-
पोज्योती॑ंष्यापोयजू॑ंष्यापःसत्यमापःसर्वादेवताआपोभूर्भुवःसुवरा-
पओम्॥ॐसूर्यश्चमामन्युश्चमन्युपतयश्चमन्युकृतेभ्यः॥पापेभ्योरक्षंतां॥

यद्रात्रियापापंमकार्षं ॥ मनसावाचांहस्ताभ्याम् ॥ पद्भ्यामुदरेणशिश्ना ॥ रात्रिस्तदवलुंपतु ॥ यत्किंचदुरितंमयि ॥ इदमहंमाममृतयोनौ ॥ सूर्ये ज्योतिषिजुहोमिस्वाहा ॥ (इतिजलंपीत्वा) आचम्य प्राणायामंकृत्वा दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्-प्रणआयूंषितारिषत् ॥ ॐआपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाच नः ॥ हिरण्यवर्णाःशुचयःपावकायासुजातःकश्यपोयास्विंद्रः ॥ अग्निंया गर्भंदधिरेविरूपास्तानआपःशंस्योनाभवंतु ॥ यासांराजावरुणो यातिमध्येसत्यानृतेअवपश्यंजनानाम् ॥ मधुश्चुतःशुचयोयाःपावकास्तानआपःशंस्योनाभवंतु ॥ यासांदेवादिविकृण्वंतिभक्षंयाअंतरि-

क्षेवहुधाभवंति॥ याःपृथिवींपर्यसौदंतिशुक्रास्तानआपःशꣳस्योनाभे-
वंतु ॥ शिवेनमाचक्षुपापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥ स-
र्वौꣳअग्नीꣳरप्सुषदौहुवेवोमयिवर्चौवलमोजोनिधत्त ॥ पवमानःसुव-
र्जनः ॥ पवित्रेणविचर्पणिः ॥ यःपोतासपुनातुमा ॥ पुनंतुमादेवज
नाः॥ पुनंतुमनवोधिया ॥ पुनंतुविश्वआयवः ॥ जातवेदःपवित्रवत् ॥
पवित्रेणपुनाहिमा ॥ शुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूꣳरनु ॥
यत्तेपवित्रमर्चिषि ॥ अग्नेवितततमंतरा ॥ ब्रह्मतेनपुनीमहे ॥ उभाभ्यां
देवसवितः ॥ पवित्रेणसवेनंच ॥ इदंब्रह्मपुनीमहे ॥ वैश्वदेवीपु
नतीदेव्यागात् ॥ यस्यैवह्वीस्तनुवोवीतपृष्ठाः ॥ तयामदंतःसधमाद्ये-
पु ॥ वयꣳस्यामपतयोरयीणाम् ॥ वैश्वानरोरश्मिभिर्मापुनातु ॥ वातः
प्राणेनैपिरोमयोभूः ॥ द्यावापृथिवीपयसापयोभिः ॥ऋतावरीयज्ञियेमा

पुनीताम् ॥ वृहद्भिःसवितस्तृभिः ॥ वर्षिष्ठैर्देवमन्मभिः ॥ अग्नेदक्षैःपु-
नाहिमा ॥ येनदेवाअपुनत ॥ येनापोदिव्यंकशः ॥ तेनदिव्येनब्रह्मणा ॥
इदंब्रह्मपुनीमहे ॥ यःपावमानीरध्येति ॥ ऋषिभिःसंभृतꣳरसम् ॥
सर्वꣳसपूतमश्नाति ॥ स्वदितंमातरिश्वना ॥ पावमानीर्योअध्येति ॥
ऋषिभिःसंभृतꣳरसम् ॥ तस्मैसरस्वतीदुहे ॥ क्षीरꣳसर्पिर्मधूदकं ॥ पाव-
मानीःस्वस्त्ययनीः ॥ सुदुघाहिपयस्वतीः ॥ ऋषिभिःसंभृतोरसः ॥ ब्रा-
ह्मणेष्वमृतꣳहितम् ॥ पावमानीर्दिशंतुनः ॥ इमंलोकमथोअमुम् ॥ का-
मान्समर्धयंतुनः ॥ देवीर्देवैःसमाभृताः ॥ पावमानीःस्वस्त्ययनीः ॥
सुदुघाहिघृतश्चुतः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतꣳहितम् ॥
येनदेवाःपवित्रेण ॥ आत्मानंपुनतेसदा ॥ तेनसहस्रधारेण ॥ पावमा
न्यःपुनंतुमा ॥ प्राजापत्यंपवित्रम् ॥ शतोद्यामꣳहिरण्मयम् ॥ तेनब्रह्म

विदोंवयम् ॥पूतंब्रह्मपुनीमहे॥ इंद्रःसुनीतीसहमांपुनातु॥सोमःस्वस्त्या वरुणःसमीच्यां ॥ यमोराजाप्रमृणाभिःपुनातुमा ॥ जातवेदामोर्जयंत्या पुनातु ॥ द्रुपदादिवेन्मुमुचानः ॥ स्विन्नस्नात्वीमलादिव ॥ पूतंपवित्रेणे- वाज्यम्॥ आपःशुंधंतुमैनसः ॥ आचम्यप्राणानायम्य ॥ॐभूर्भुवःसुवः तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि॥ धियोयोनःप्रचोदयात् ॥श्रीसूर्याय इदमर्घ्यं दत्तं न मम इतित्रिः ॥ असावादित्योब्रह्मेतिब्रह्मैवसन्ब्रह्माप्ये- तियएवंवेदआचम्य॥ॐकेशवाय नमः० श्रीकृष्णाय नमः॥प्राणायामं कृत्वा ॥ अपक्रामंतु पिशाचा भूताये भूमिपालकाः ॥ भूतानामवरो- धेन ब्रह्मकर्म समारभे ॥ पृथ्वीति मंत्रस्य मेरुपृष्ठ ऋषिः कूर्मो देवता सुतलं छंदः आसने विनियोगः ॥ ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ अंगुष्ठाग्रे

तु गोविंदं तर्जन्यां तु महीधरं ॥ मध्यमायां हृषीकेशमनामिक्यां त्रिविक्रमम् ॥ कनिष्ठिक्यां न्यसेद्विष्णुं करमध्ये तु माधवम् ॥ एवं च करविन्यासं सर्वपापप्रणाशनम् ॥ॐभूःपादाभ्यां नमः॥ ॐभुवः जानुभ्यां नमः॥ॐस्वः कटिभ्यां नमः॥ ॐमहः नाभ्यै नमः॥ ॐजनःहृदयाय नमः ॥ ॐतपःकंठाय नमः॥ॐसत्यं ललाटायनमः॥ ॐ परब्रह्म शिरसे स्वाहा॥तत्सवितुर्ब्रह्मात्मने हृदयाय नमः ॥ वरेण्यं विष्णवात्मने शिरसे स्वाहा ॥ भर्गोदेवस्य रुद्रात्मने शिखायै वषट् ॥ धीमहि परमात्मने कवचायहुं ॥ धियोयोनो ज्ञानात्मने नेत्रत्रयाय वौषट् ॥ प्रचोदयात्सत्यात्मने अस्त्राय फट् ॥ इति दिग्बंधः ॥ गायत्र्या गायत्रीच्छंदो विश्वामित्र ऋषिः सविता देवताग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयरुद्रः शिखा पृथिवी योनिः प्राणापानव्यानोदानसमाना सप्राणा श्वेतवर्णा

सांख्यायनसगोत्रा गायत्री चतुर्विंशत्यक्षरा त्रिपदा षट्कुक्षिः पंच-
शीर्षोपनयने विनियोगः॥ॐभूः ॐभुवः ॐसुवः ॐमहः ॐजनः ॐ
तपः ॐसत्यम्॥ॐतत्सवितुर्वरेण्यं भर्गोदेवस्यधीमहि॥ धियोयोनः
प्रचोदयात्॥ओमापोज्योतीरसोमृतं ब्रह्मभूर्भुवःसुवरोम्॥प्रातःसंध्यां-
गत्वेनाष्टोत्तरशतमष्टाविंशतिर्दशसंख्यं वा गायत्रीजपमहं करिष्ये॥
ॐभूर्भुवःसुवः॥तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि॥धियोयोनःप्रचोद-
यात्॥ॐइति गायत्रीं जप्त्वा॥ तत्सवितुर्ब्रह्मात्मने हृदयाय नमः॥
वरेण्यंविष्ण्वात्मने शिरसे स्वाहा॥भर्गोदेवस्यरुद्रात्मने शिखायै वषट्॥
धीमहि परमात्मने कवचायहुम्॥ धियोयोनोज्ञानात्मने नेत्रत्रयाय वौ-
षट्॥ प्रचोदयात्सत्यात्मने अस्त्रायफट्॥इति दिग्बंधः॥ॐमित्रस्यचर्ष
णीधृतश्रवोदेवस्यसानसि॥सत्यश्चित्रश्रवस्तमं ॥ मित्रोजनान्यातय

तिप्रजानन्मित्रोदाधारपृथिवीमुतद्यां ॥ मित्रःकृष्टीरनिमिषाभिचष्टेस
त्यायहव्यंघृतवद्विधेम ॥ प्रसमित्रमर्तोअस्तुप्रयस्वान्यस्तआदित्यशि-
क्षतिव्रतेन ॥ नहन्यतेनजीयतेत्वोतोनैनमंहोअश्नोत्यंतितोनदूरात् ॥
यच्चिद्धितेविशोयथाप्रदेववरुणव्रतं ॥ मिनीमसिद्यविद्यवि ॥ यत्किंचे
दंवरुणदैव्येजनेभिद्रोहंमनुष्याश्चरामसि ॥अचित्तीयत्तवधर्मायुयोपिम
मानस्तस्मादेनसोदेवरीरिषः॥कितवासोयद्रिरिपुर्नदीवियद्वाघासत्यमु
तयन्नविद्म ॥ सर्वाताविष्यशिथिरेवदेवाथातेस्यामवरुणप्रियासः॥ याः
सदासर्वभूतानिस्थावराणिचराणिच ॥ सायंप्रातर्नमस्यंतिसामासंध्या
अभिरक्षत्वोंनमः ॥ नमः प्राच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येता
भ्यश्चनमोनमोदक्षिणायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चन
मोनमःप्रतीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमउ

दीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमऊर्ध्वायैदिशे याश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोधरायैदिशेयाश्चदेवता एतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोवांतरायैदिशेयाश्चदेवताएतस्यां प्रतिवसंत्येताभ्यश्चनमोनमोगंगायमुनयोर्मध्येयेवसंतितेमेप्रसन्नात्मा नश्चिरंजीवितंवर्धयंतिनमोगंगायमुनयोर्मुनिभ्यश्चनमोनमोगंगायमुन योर्मुनिभ्यश्चनमः ॥ अवांतरदिशाभ्यो नमः ॥ सꣳस्रवंतुदिशोमयिसा मागच्छंतुसूनृताः ॥ सर्वेकामाअभियंतुनः ॐप्रियाअभिस्रवंतुनः ॥ ॐ प्रियाअभिवादये॥ अमुकप्रवरान्वितामुकगोत्रोत्पन्नःयजुर्वेदस्यतैत्तिरी यशाखांतर्गतहिरण्यकेशीशाखाध्यायी अमुकशर्माहं भोःअभिवादया मि॥नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च॥ जगद्धिताय कृष्णाय गो विंदाय नमोनमः ॥ उत्तमेशिखरेजातेभूम्यांपर्वतमूर्धनि ॥ ब्राह्मणेभ्यो-

भ्यंनुज्ञातागच्छदेविय़थासुखं॥स्तुतोमयावरदावेदमाताप्रचोदयंतीपव
नेद्विजाता॥आयुःपृथिव्यांद्रविणंब्रह्मवर्चसंमह्यंदत्वाप्रजातुंब्रह्मलोकं॥
घृणिःसूर्यआदित्योनप्रभावात्यक्षरं॥मधुक्षरंतितद्रसं॥सत्यंवैतद्रसमा
पोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम्॥ श्रियै नमः। संध्यायै नमः।
विद्यायैः नमः। गुरुभ्यो नमः। वेदाय नमः। वेदपुरुषाय नमः।सर्वे-
भ्यो देवेभ्यो नमः।सर्वेभ्यो ब्राह्मणेभ्यो नमो नमः। आकाशात्पतितं
तोयं यथा गच्छति सागरम्॥सर्वदेवनमस्कारः केशवं प्रति गच्छति॥
केशवाय नम इत्यादि प्राणायामं कृत्वा॥अनेन प्रातःसंध्यानित्यकर्मणा
भगवान् श्रीपरमेश्वरः प्रीयताम्॥ विष्णवे नमो विष्णवे नमो विष्णवे
नमः॥ इति प्रातःसंध्या समाप्ता॥

## ॥ अथ मध्याह्नसंध्याप्रारंभः ॥

केशवाय नम इत्यादि प्राणायामं कृत्वा ॥ मध्याह्नसंध्या युवाना श्वेता श्वेतवर्णा श्वेतवस्त्रा श्वेतगंधा श्वेतमाल्यानुलेपना वृषभवाहना रुद्रदैवत्या दक्षिणाग्न्युपस्थापना यजुर्वेदसंहिता द्वितीया रुद्रसंध्या धर्मवतीनाम्नी मम उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं मध्याह्न-संध्योपास्तिं करिष्ये ॥ आयातुवरदादेवी० सर्वादेवताआपोभूर्भुवः सुवरापओम् ॥ आपःपुनंतुपृथिवींपृथिवीपूतापुनातुमां ॥ पुनंतुब्रह्मणः स्पतिर्ब्रह्मपूतापुनातुमां ॥ यदुच्छिष्टमभोज्यंयद्वादुश्चरितंमम ॥ सर्वं-पुनंतुमामापोसतांचप्रतिग्रहुंस्वाहा ॥ ॐकेशवाय नमः । नारायणाय नमः । माधवाय नमः । दधिक्राव्णोअकारिषमित्यादि अर्घ्यदानांते प्राणायामांतं प्रातःसंध्यावत् ॥ ॐ उद्वयंतमसस्परिपश्यंतोज्योति

रुत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमं ॥ उदुत्यंजातवेदसंदेवंवहं-
तिकेतवः ॥ दृशेविश्वायसूर्यं ॥ चित्रंदेवानामुदगादनीकंचक्षुर्मि-
त्रस्यवरुणस्याग्नेः॥आप्राद्यावापृथिवीअंतरिक्षᳪसूर्यआत्माजगतस्त-
स्थुषश्च॥ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदःशतंजी
वेमशरदःशतंनंदामशरदःशतंमोदामशरदःशतंभवामशरदःशतᳪशृ
णवामशरदःशतंप्रब्रवामशरदःशतमजीतास्यामशरदःशतंज्योक्चसू
र्यंदृशे ॥ यउदगान्महतोर्णवाद्विभ्राजमानःसरिरस्यमध्यात्समावृषभो
लोहिताक्षःसूर्योविपश्चिन्मनसापुनातु॥ अवांतरदिशाभ्यो नमः॥अप-
क्रामंतु पिशाचादिप्राणायामं कृत्वा ॥ मध्याह्नसंध्यांगं अष्टोत्तरशतं
अष्टाविंशतिर्दशसंख्यं वा गायत्रीजपमहं करिष्ये॥ गायत्रीजपं कृत्वा॥
सᳪस्रवंतुदिशोमयि॰ अनेन मध्याह्नसंध्यानित्यकर्मणा भगवान्परमे-

श्वरः प्रीयताम् ॥ विष्णवे नमो विष्णवे नमो विष्णवे नमः ॥ इति मध्याह्नसंध्या समाप्ता ॥

॥ अथ सायंसंध्याप्रारंभः ॥

केशवाय नम इत्यादिप्राणायामं कृत्वा ॥ सायंसंध्या वृद्धा कृष्णा कृष्णवर्णा कृष्णवस्त्रा कृष्णगंधा कृष्णमाल्यानुलेपना गरुडवाहना विष्णुदैवत्या आहवनीयाग्न्युपस्थाना सामवेदसंहिता तृतीया विष्णुसंध्या सत्यवतीनाम्नी मम उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायंसंध्योपास्तिं करिष्ये ॥ आयांतुवरदादेवी ० सर्वादेवताआपोभूर्भुवः सुवरापओम् ॥ अग्निश्चमामन्युश्चमन्युपतयश्चमन्युकृतेभ्यः ॥ पापेभ्यो रक्षंतां ॥ यदह्नापापमकार्षं ॥ मनसावाचाहस्ताभ्यां ॥ पद्भ्यामुदरेणशिश्ना ॥ अहस्तदवलुंपतु ॥ यत्किंचदुरितंमयि ॥ इदमहं माममृतयोनौ ॥

सत्येज्योतिषिजुहोमिस्वाहा ॥ ॐकेशवाय नमः ॥ नारायणाय० ॥ द्रुप-
दादिवेन्मुमुचानः ॥ स्विन्नस्नात्वीमलादिव ॥ पूतंपवित्रेणेवाज्यं ॥
आपःशुंधंतुमैनसः ॥ ॐ भूर्भुवःसुवस्तत्सवितुर्वरेण्यंभर्गोदेवस्यधी-
महि ॥ धियोयोनःप्रचोदयात् ॥ ॐ श्रीवरुणायइदमर्घ्यं दत्तं नमम ॥
एवंत्रिःअर्घ्यंदत्वा ॥ असावादित्योब्रह्मेतिब्रह्मैवसन्ब्रह्माप्येतियएवं
वेद ॥ ॐकेशवाय नमः इत्यादिप्राणायामं कृत्वा ॥ अपक्रामंतु० ओमा
पोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ सायंसंध्यांगमष्टोत्तरशतमष्टा-
विंशतिर्दशसंख्यं वा गायत्रीजपमहं करिष्ये ॥ गायत्रीजपं कृत्वा ॥ ॐ
इमंमेवरुणश्रुधीहवमद्याचमृडय॥त्वामवस्युराचके॥ॐतत्त्वायामिब्रह्म
णावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुश
ंसमानआयुःप्रमोषीः॥ ॐत्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासि

सीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाᳫंसिप्रमुमुग्ध्यस्मत् ॥
सत्वन्नोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ॥ अवयक्ष्वनोवरुणᳫं
रराणोवीहिमृडीकᳫंसुहवोनएधि ॥ ॐयच्चिद्धितेविशोयथाप्रदेववरुण
व्रतं॥ मिनीमसिद्यविद्यवि ॰ सायंप्रातर्नमस्यंतिसामासंध्याअभिरक्षत्वों
नमः ॥ नमःप्रतीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोन
मउदीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमःप्राच्यै
दिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोदक्षिणायैदिशेया
श्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमऊर्ध्वायैदिशेयाश्चदेवता ॰
आयुःपृथिव्यांद्रविणंब्रह्मवर्चसंमह्यंदत्वाप्रजातुंब्रह्मलोकं ॥ ॐश्रियै
नमः॥संध्यायैनमः॥ विद्यायै नमः॥ अनेन सायंसंध्याख्यकर्मणा भग-
वान्परमेश्वरः प्रीयताम्॥ विष्णवे नमो विष्णवे नमो विष्णवे नमः ॥

॥ अथ तृचाकल्पनमस्कारप्रारंभः ॥

श्रीगणेशाय नमः ॥ अद्येत्यादि० श्रीसवितृसूर्यनारायणप्रीत्यर्थं तृचाकल्पेन विधिना नमस्काराख्यं कर्म करिष्ये ॥ अथ ध्यानम् ॥ ध्येयः सदा सवितृमंडलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः ॥ केयूरवान्मकरकुंडलवान् किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः ॥ ॐ ह्रां उद्यन्नद्यमित्रमहः ह्रां ॐ मित्राय नमः ॥१॥ ॐ ह्रीं आरोहन्नुत्तरां दिवं ह्रीं ॐ रवये नमः ॥ २ ॥ ॐ ह्रूं हृद्रोगंममसूर्य ह्रूं ॐ सूर्याय० ॥ ३ ॥ ॐ ह्रैं हरिमाणंचनाशय ह्रैं ॐ भानवे० ॥ ४ ॥ ॐ ह्रौं शुकेषुमेहरिमाणं ह्रौं ॐ खगाय० ॥ ५ ॥ ॐ ह्रः रोपणाकासुदध्मसि ह्रः ॐ पूष्णे० ॥ ६ ॥ ॐ ह्रां अथोहारिद्रवेषुमे ह्रां ॐ हिरण्यगर्भाय० ॥७॥ ॐ ह्रीं हरिमाणंनिदध्मसि ह्रीं ॐ मरीचये० ॥ ८ ॥ ॐ

ह्रूं उदगाद्‌यमादित्यः ह्रूं ॐ आदित्या० ॥ ९ ॥ ॐ ह्रैं विश्वेनसहंसा
सह ह्रैं ॐ सवित्रे० ॥ १० ॥ ॐ ह्रौं द्विषंतंममरंधयन् ह्रौं ॐ अर्का
य० ॥ ११ ॥ ॐ ह्रः मोअहंद्विषतेरंधं ह्रः ॐ भास्कराय० ॥ १२ ॥
ॐ ह्रां ह्रीं उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवं ॐ ह्रां ह्रीं मित्ररविभ्यां
नमः ॥ ॐ ह्रूं ह्रैं हृद्रोगंममसूर्यहरिमाणंचनाशय ह्रूं ह्रैं ॐ सूर्यभा
नु० ॥ ॐ ह्रौं ह्रः शुकेंपुमेहरिमाणंरोपणाकासुदध्मसि ह्रौं ह्रः ॐ खगपू
पभ्यां न० ॥ ॐ ह्रां ह्रीं अथोहारिद्रवेपुमेहरिमाणंनिदध्मासि ॥ ह्रां ह्रीं
ॐ हिरण्यगर्भमरीचिभ्यां० ॥ ॐ ह्रूं ह्रैं उदगाद्‌यमादित्योविश्वेनस
हंसासह ह्रूं ह्रैं ॐ आदित्यसवितृभ्यांनः ॥ ॐ ह्रौं ह्रः द्विषंतंमम
रंधयन्मोअहंद्विषतेरंधं ह्रौं ह्रः ॐ अर्कभास्कराभ्यां० ॥ ॐ ह्रां ह्रीं
ह्रूं ह्रैं उद्यन्नद्य० दिवं ॥ हृद्रो० नाशय ॥ ह्रां ह्रीं ह्रूं ह्रैं ॐ मित्रर

विसूर्यभानुभ्यो०॥ ॐ ह्रौं ह्रः ह्रां ह्रीं शुकें० सुदध्मसि॥ अथोहा०नि दध्मसि॥ ह्रौं ह्रः ह्रां ह्रीं ॐ खगपूषहिरण्यगर्भमरीचि०॥ ॐ ह्रूं ह्रैं ह्रौं ह्रः उदगा० सह॥ द्विषंतं०रंधं॥ ह्रूं ह्रैं ह्रौं ह्रः ॐ आदित्यसवित्रर्क भास्करेभ्योन०॥ ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः उद्यन्न० द्विषंतंममरंधयन्मोअहंद्विषतेरंधं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करेभ्यो नमः इति त्रिः ॥ तृचाकल्पनमस्काराः समाप्ताः ॥


इदं पुस्तकं मुंबय्यां 'निर्णयसागर' मुद्रणयंत्रालयाधिपैः पांडुरंग जावजी इत्येतैः मुद्रापितम्. शाकः १८५२, सन १९३०.

Published by Pandurang Jawaji, Printed by Ramchandra Yesu Shedge, } At the Nirnaya-sagar Press, 26-28, Kolbhat Lane, Bombay.

॥ इति हिरण्यकेशीया त्रिकालसंध्या ॥

# ॥ अथ हिरण्यकेशीया त्रिकालसंध्या ॥

मूल्यं १ आणकः.

# अथ विभूतिधारणमंत्रः ॥

श्रीगणेशाय नमः ॥ (हस्ते भस्म जलं च गृहीत्वा) ॐ ईशानःसर्वविद्या नामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेंअस्तुस दाशिवोम् ॥ शिरसि॥ ॐतत्पुरुषायविद्महेंमहादेवायधीमहि॥तन्नोरुद्रः प्रचोदयात् ॥ मुखे ॥ ॐ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥ हृदये ॥ ॐ वामदेवायनमोज्येष्ठा-यनमः श्रेष्ठायनमोरुद्रायनमःकालायनमःकलविकरणायनमोबलविक-रणायनमोबलायनमोबलप्रमथनायनमःसर्वभूतदमनायनमोमनोन्मे-नायनमः ॥ गुह्ये॥ ॐसद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः॥भवे-भवेनातिभवेभवस्वमांभवोद्भवायनमः॥पादयोः॥ ॐअग्निरिति भस्म॥ ॐवायुरिति भस्म॥ॐजलमिति भस्म॥ॐस्थलमिति भस्म॥ॐव्योमेति

भस्म॥ॐसर्वंॱह्वाइदंभस्म॥ॐमानस्तोकेतनयेमानआयुषिमानोगो-
पुमानोअश्वेपुरीरिषः॥वीरान्मानोरुद्रभामितोवधीर्हविष्मंतोनमसावि-
धेमते॥इतिसर्वांगेभस्मविलेप्य॥आचम्य॥केशवादिप्राणायामंकृत्वा॥

॥ अथ प्रातःसंध्या ॥

श्रीगणेशाय नमः ॥ ( प्राङ्मुख उदङ्मुखो वा कुशासने ऊर्णासने वोपविश्य ) ( उत्तमा तारकोपेता मध्यमा लुप्ततारका ॥ अधमा सूर्यसहिता प्रातःसंध्या त्रिधा मता ) ॥ ॐ केशवाय नमः ॥ नारायणाय नमः ॥ माधवाय नमः ॥ गोविंदाय नमः ॥ विष्णवे नमः ॥ मधुसूदनाय नमः ॥ त्रिविक्रमाय नमः ॥ वामनाय नमः ॥ श्रीधराय नमः ॥ हृषीकेशाय नमः ॥ पद्मनाभाय नमः ॥ दामोदराय नमः ॥ संकर्षणाय नमः ॥ वासुदेवाय नमः ॥ प्रद्युम्नाय नमः ॥ अनिरुद्धाय नमः ॥

पुरुषोत्तमाय नमः ॥ अधोक्षजाय नमः ॥ नारसिंहायनमः ॥ अच्युताय नमः ॥ जनार्दनाय नमः ॥ उपेंद्राय नमः ॥ हरये नमः ॥ श्रीकृष्णाय नमः ॥ ॐ भूः ॥ ॐ भुवः ॥ ॐ स्सुवः ॥ ॐ महः ॥ ॐ जनः ॥ ॐ तपः ॥ ॐ सत्यम् ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ॐ आपोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ प्रातःसंध्या ॥ कुमारी ॥ रक्ता ॥ रक्तवर्णा ॥ रक्तवस्त्रा ॥ रक्तगंधानुलेपना ॥ रक्तमाल्या ॥ हंसवाहना ब्रह्मदैवत्या ॥ गार्हपत्याग्न्युपस्थाना ॥ ऋग्वेदसंहिता ॥ प्रथमा ब्रह्मसंध्या वेदवतीनाम्नी ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःसंध्योपास्तिंकरिष्ये ॥ आयातुवरदादेवीअक्षरंब्रह्मसंमितम् ॥ गायत्रींछंदसांमातेदं ब्रह्मजुपस्वमे ॥ यदह्नात्कुरुतेपापंतदह्नात्प्रतिमुच्यते ॥ यद्रात्रियात्कुरुतेपा-

पंतद्रात्रियात्प्रतिमुच्यते॥ सर्ववर्णेमहादेविसंध्याविद्येसरस्वति ॥ अज-
रेअमरेदेविसर्वदेविनमोस्तुते ॥ ॐ ओजोसिसहोसिबलमसिभ्राजो-
सिदेवानांधामनामासिविश्वमसिविश्वायुःसर्वमसिसर्वायुरभिभूरोंगाय
त्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि छंदर्षीनावा
हयामि श्रियमावाहयामि ह्रियमावाहयामि ॥ ॐआपोहिष्ठामयोभुव-
स्तानऊर्जेदधातन ॥ महेरणायचक्षसे॥योवःशिवतमोरसस्तस्यभाजय-
तेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥
आपोजनयथाचनः॥ आपोवाइदꣳसर्वंविश्वाभूतान्यापःप्राणावाआपः
पशवआपोन्नमापोमृतमापःसम्राडापोविराडापः स्वराडापश्छंदाꣳस्या-
पोज्योतीꣳष्यापोयजूꣳष्यापःसत्यमापःसर्वादेवताआपोभूर्भुवःसुवरा-
पओम्॥ॐसूर्यश्चमामन्युश्चमन्युपतयश्चमन्युकृतेभ्यः॥पापेभ्योरक्षंतां॥

यद्रात्रियापापंमकार्षं ॥ मनसावाचांहस्ताभ्याम् ॥ पद्भ्यामुदरेंणशिश्ना ॥
रात्रिस्तदंवलुंपतु ॥ यत्किंचंदुरितंमयिं ॥ इदमहंमाममृंतयोनौ ॥ सूर्ये
ज्योतिषिजुहोमिस्वाहा ॥ (इतिजलंपीत्वा) आचम्य प्राणायामंकृत्वा
दधिक्राव्णोअकारिषंजिष्णोरश्वंस्यवाजिनंः ॥ सुरभिनोमुखाकरत्-
प्रणआयूंᳬषितारिषत् ॥ ॐआपोहिष्ठामंयोभुवस्तानंऊर्जेदंधातन ॥
महेरणांयचक्षंसे ॥ योवंःशिवतंमोरसस्तस्यंभाजयतेहनंः ॥ उशतीं-
रिवमातरंः ॥ तस्माअरंगमामवोयस्यक्षयांयजिन्वंथ ॥ आपोंजनयंथाच
नः ॥ हिरंण्यवर्णाःशुचंयःपावकायासुंजातःकश्यपोयास्विंद्रः ॥ अग्निंया
गर्भंदधिरेविरूंपास्तानआपःशᳬस्योनाभंवंतु ॥ यासाᳬराजावरुंणो
यातिमध्येंसत्यानृतेअंवपश्यंजनांनाम् ॥ मधुश्चुतःशुचंयोयाःपांवका-
स्तानआपःशᳬस्योनाभंवंतु ॥ यासांदिवादिविकृण्वंतिंभक्षंयाअंतरिं-

क्षेवहुधाभवंति॥ याःपृथिवींपयसोंदंतिशुक्रास्तानआपःशꣳस्योनाभ-
वंतु ॥ शिवेनंमाचक्षुपांपश्यंतापःशिवयांतनुवोपंस्पृशतत्वचंमे ॥ स-
र्वांꣳअग्नीꣳरप्सुपदोंहुवेवोमयिवर्चोंवलमोजोनिधंत्त ॥ पवमानःसुव-
र्जनः ॥ पवित्रेणविचर्पणिः ॥ यःपोतासपुंनातुमा ॥ पुनंतुमादेवज
नाः॥ पुनंतुमनंवोधिया ॥ पुनंतुविश्वआयवः ॥ जातवेदःपवित्रंवत् ॥
पवित्रेणपुनाहिमा ॥ शुक्रेणदेवदीद्यंत् ॥ अग्नेक्रत्वाक्रतूꣳरनु ॥
यत्तेपवित्रमर्चिपि ॥ अग्नेवितंतमंतरा ॥ ब्रह्मतेनंपुनीमहे ॥ उभाभ्यां
देवसवितः ॥ पवित्रेणसवेनंच ॥ इदंब्रह्मपुनीमहे ॥ वैश्वदेवीपु
नतीदेव्यागात् ॥ यस्यैवह्वीस्तनुवोंवीतपृष्ठाः ॥ तयामदंतःसधमाद्ये-
षु ॥ वयꣳस्यामपतंयोरयीणाम् ॥ वैश्वानरोरश्मिभिर्मापुनातु ॥ वातः
प्राणेनेंपिरोमंयोभूः ॥ द्यावापृथिवीपयंसापयोंभिः ॥ऋतावरीयज्ञियेमा

पुनीताम् ॥ बृहद्भिःसवितस्तृभिः ॥ वर्षिष्ठैर्देवमन्मभिः ॥ अग्नेदक्षैःपु-
नाहिमा ॥ येनदेवाअपुनत ॥ येनापोदिव्यंकशः ॥ तेनदिव्येनब्रह्मणा ॥
इदंब्रह्मपुनीमहे ॥ यःपावमानीरध्येति ॥ ऋषिभिःसंभृतꣳरसम् ॥
सर्वꣳसपूतमश्नाति ॥ स्वदितंमातरिश्वना ॥ पावमानीर्योअध्येति ॥
ऋषिभिःसंभृतꣳरसम् ॥ तस्मैसरस्वतीदुहे ॥ क्षीरꣳसर्पिर्मधूदकं ॥ पाव-
मानीःस्वस्त्ययनीः ॥ सुदुघाहिपयस्वतीः ॥ ऋषिभिःसंभृतोरसः ॥ ब्रा-
ह्मणेष्वमृतꣳहितम् ॥ पावमानीर्दिशंतुनः ॥ इमंलोकमथोअमुम् ॥ का-
मान्त्समर्धयंतुनः ॥ देवीर्देवैःसमाभृताः ॥ पावमानीःस्वस्त्ययनीः ॥
सुदुघाहिघृतश्चुतः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतꣳहितम् ॥
येनदेवाःपवित्रेण ॥ आत्मानंपुनतेसदा ॥ तेनसहस्रधारेण ॥ पावमा
न्यःपुनंतुमा ॥ प्राजापत्यंपवित्रम् ॥ शतोद्यामꣳहिरण्मयम् ॥ तेनब्रह्म

विदोवयम् ॥पूतंब्रह्मपुनीमहे॥ इंद्रःसुनीतीसहमांपुनातु॥सोमःस्वस्त्या वरुणःसमीच्या ॥ यमोराजाप्रमृणाभिःपुनातुमा ॥ जातवेदामोर्जयंत्या पुनातु ॥ द्रुपदादिवेन्मुमुचानः ॥ स्विन्नस्नात्वीमलादिव ॥ पूतंपवित्रेणे-वाज्यम् ॥ आपःशुंधंतुमैनसः ॥ आचम्यप्राणानायम्य ॥ॐभूर्भुवःसुवः तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि॥ धियोयोनःप्रचोदयात् ॥श्रीसूर्याय इदमर्घ्यं दत्तं न मम इतित्रिः ॥ असावादित्योब्रह्मेतिब्रह्मैवसन्ब्रह्माप्ये-तियएवंवेदआचम्य॥ॐकेशवाय नमः० श्रीकृष्णाय नमः॥प्राणायामं कृत्वा ॥ अपक्रामंतु पिशाचा भूताये भूमिपालकाः ॥ भूतानामवरो-धेन ब्रह्मकर्म समारभे ॥ पृथ्वीति मंत्रस्य मेरुपृष्ठ ऋषिः कूर्मो देवता सुतलं छंदः आसने विनियोगः ॥ ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ अंगुष्ठाग्रे

तु गोविंदं तर्जन्यां तु महीधरं ॥ मध्यमायां हृषीकेशमनामिक्यां त्रिविक्रमम् ॥ कनिष्ठिक्यां न्यसेद्विष्णुं करमध्ये तु माधवम् ॥ एवं च करविन्यासं सर्वपापप्रणाशनम् ॥ॐभूःपादाभ्यां नमः॥ ॐभुवः जानुभ्यां नमः॥ॐस्वः कटिभ्यां नमः॥ ॐमहः नाभ्यै नमः॥ ॐजनःहृदयाय नमः ॥ ॐतपःकंठाय नमः॥ॐसत्यं ललाटायनमः॥ ॐ परब्रह्म शिरसे स्वाहा॥तत्सवितुर्ब्रह्मात्मने हृदयाय नमः ॥ वरेण्यं विष्णवात्मने शिरसे स्वाहा ॥ भर्गोदेवस्य रुद्रात्मने शिखायै वषट् ॥ धीमहि परमात्मने कवचायहुं ॥ धियोयोनो ज्ञानात्मने नेत्रत्रयाय वौषट् ॥ प्रचोदयात्सत्यात्मने अस्त्राय फट् ॥ इति दिग्बंधः ॥ गायत्र्या गायत्रीच्छंदो विश्वामित्र ऋषिः सविता देवताग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयंरुद्रः शिखा पृथिवी योनिः प्राणापानव्यानोदानसमाना सप्राणा श्वेतवर्णा

सांख्यायनसगोत्रा गायत्री चतुर्विंशत्यक्षरा त्रिपदा षट्कुक्षिः पंच-
शीर्षोपनयने विनियोगः॥ॐभूः ॐभुवः ॐसुवः ॐमहः ॐजनः ॐ
तपः ॐसत्यम्॥ॐतत्सवितुर्वरेण्यं भर्गोदेवस्यधीमहि॥ धियोयोनः
प्रचोदयात्॥ओमापोज्योतीरसोमृतं ब्रह्मभूर्भुवःसुवरोम्॥प्रातःसंध्यां-
गत्वेनाष्टोत्तरशतमष्टाविंशतिर्दशसंख्यं वा गायत्रीजपमहं करिष्ये॥
ॐभूर्भुवःसुवः॥तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि॥धियोयोनःप्रचोद-
यात्॥ॐइति गायत्रीं जप्त्वा॥ तत्सवितुर्ब्रह्मात्मने हृदयाय नमः॥
वरेण्यंविष्ण्वात्मने शिरसे स्वाहा॥भर्गोदेवस्यरुद्रात्मने शिखायै वषट्॥
धीमहि परमात्मने कवचायहुम्॥ धियोयोनोज्ञानात्मने नेत्रत्रयाय वौ-
षट्॥ प्रचोदयात्सत्यात्मने अस्त्रायफट्॥इति दिग्बंधः॥ॐमित्रस्यचर्ष
णीधृतश्रवोदेवस्यसानसि॥ सत्यश्चित्रश्रवस्तमं॥ मित्रोजनान्यातय

तिप्रजानन्मित्रोदाधारपृथिवीमुतद्यां ॥ मित्रःकृष्टीरनिमिषाभिचष्टेस
त्यायहव्यंघृतवद्विधेम ॥ प्रसमित्रमर्तोअस्तुप्रयस्वान्यस्तआदित्यशि-
क्षतिव्रतेन ॥ नहन्यतेनजीयतेत्वोतोनैनमꣳहोअश्नोत्यंतितोनदूरात् ॥
यच्चिद्धितेविशोयथाप्रदेववरुणव्रतं ॥ मिनीमसिद्यविद्यवि ॥ यत्किंचे
दंवरुणदैव्येजनेभिद्रोहंमनुष्याश्चरामसि ॥अचित्तीयत्तवधर्मायुयोपिम
मानस्तस्मादेनसोदेवरीरिषः॥कितवासोयद्रिरिपुर्नदीवियद्वाघासत्यमु
तयन्नविद्म ॥ सर्वाताविष्यशिथिरेवदेवाथातेस्यामवरुणप्रियासः॥ याꣳ
सदासर्वभूतानिस्थावराणिचराणिच ॥ सायंप्रातर्नमस्यंतिसामासंध्या
अभिरक्षत्वोनमः ॥ नमः प्राच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येता
भ्यंश्चनमोनमोदक्षिणायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यंश्चन
मोनमःप्रतीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यंश्चनमोनमउ

दींच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमऊर्ध्वायैदिशे
याश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोधरायैदिशेयाश्चदेवता
एतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोवांतरायैदिशेयाश्चदेवताएतस्यां
प्रतिवसंत्येताभ्यश्चनमोनमोगंगायमुनयोर्मध्येयेवसंतितेमेप्रसन्नात्मा
नश्चिरंजीवितंवर्धयंतिनमोगंगायमुनयोर्मुनिभ्यश्चनमोनमोगंगायमुन
योर्मुनिभ्यश्चनमः ॥ अवांतरदिशाभ्यो नमः ॥ सᳬस्रवंतुदिशोमयिसा
मागच्छंतुसूनृताः ॥ सर्वेकामाअभियंतुनः ॐप्रियाअभिस्रवंतुनः ॥ ॐ
प्रियाअभिवादये ॥ अमुकप्रवरान्वितामुकगोत्रोत्पन्नःयजुर्वेदस्यतैत्तिरी
यशाखांतर्गतहिरण्यकेशीशाखाध्यायी अमुकशर्माहं भोःअभिवादया
मि ॥ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ॥ जगद्धिताय कृष्णाय गो
विंदाय नमोनमः ॥ उत्तमेशिखरेजातेभूम्यांपर्वतमूर्धनि ॥ ब्राह्मणेभ्यो-

भ्यंनुज्ञातागच्छदेंवियथासुखं॥स्तुतोमयावरदावेंदमाताप्रचोदयंतीपव
नेंद्विजाता॥आयुःपृथिव्यांद्रविणंब्रह्मवर्चसंमह्यंदत्वाप्रजातुंब्रह्मलोकं॥
घृणिःसूर्यआदित्योनप्रभावात्यक्षरं॥मधुक्षरंतितद्रसं॥सत्यंवैतद्रसमा
पोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम्॥ श्रियै नमः। संध्यायै नमः।
विद्यायैः नमः। गुरुभ्यो नमः। वेदाय नमः। वेदपुरुषाय नमः।सर्वे-
भ्यो देवेभ्यो नमः।सर्वेभ्यो ब्राह्मणेभ्यो नमो नमः। आकाशात्पतितं
तोयं यथा गच्छति सागरम्॥सर्वदेवनमस्कारः केशवं प्रति गच्छति॥
केशवाय नम इत्यादि प्राणायामं कृत्वा॥ अनेन प्रातःसंध्यानित्यकर्मणा
भगवान् श्रीपरमेश्वरः प्रीयताम्॥ विष्णवे नमो विष्णवे नमो विष्णवे
नमः॥ इति प्रातःसंध्या समाप्ता॥

## ॥ अथ मध्याह्नसंध्याप्रारंभः ॥

केशवाय नम इत्यादि प्राणायामं कृत्वा॥ मध्याह्नसंध्या युवाना श्वेता श्वेतवर्णा श्वेतवस्त्रा श्वेतगंधा श्वेतमाल्यानुलेपना वृषभवाहना रुद्रदैवत्या दक्षिणाग्न्युपस्थापना यजुर्वेदसंहिता द्वितीया रुद्रसंध्या धर्मवतीनाम्नी मम उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं मध्याह्नसंध्योपास्तिं करिष्ये ॥ आयातुवरदादेवी० सर्वादेवताआपोभूर्भुवः सुवरापओम्॥ आपःपुनंतुपृथिवींपृथिवीपूतापुनातुमां ॥ पुनंतुब्रह्मणस्पतिर्ब्रह्मपूतापुनातुमां ॥ यदुच्छिष्टमभोज्यंयद्वादुश्चरितंमम ॥ सर्वंपुनंतुमामापोऽसतांचप्रतिग्रहꣳस्वाहा ॥ ॐकेशवाय नमः। नारायणाय नमः । माधवाय नमः । दधिक्राव्णोअकारिषमित्यादि अर्घ्यदानांते प्राणायामांतं प्रातःसंध्यावत् ॥ ॐ उद्वयंतमसस्परिपश्यंतोज्योति

रुत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमं ॥ उदुत्यंजातवेदसंदेवंवहं-
तिकेतवः ॥ दृशेविश्वायसूर्यं ॥ चित्रंदेवानामुदगादनीकंचक्षुर्मि-
त्रस्यवरुणस्याग्नेः॥ आप्राद्यावापृथिवीअंतरिक्षꣳसूर्यआत्माजगतस्त-
स्थुषश्च॥ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदःशतंजी
वेमशरदःशतंनंदामशरदःशतंमोदामशरदःशतंभवामशरदःशतꣳशृ
णवामशरदःशतंप्रब्रवामशरदःशतमजीतास्यामशरदःशतंज्योक्चसू
र्यंदृशे ॥ यउदगान्महतोर्णवाद्विभ्राजमानःसरिरस्यमध्यात्समावृषभो
लोहिताक्षःसूर्योविपश्चिन्मनसापुनातु ॥ अवांतरदिशाभ्यो नमः॥अप-
क्रामंतु पिशाचादिप्राणायामं कृत्वा ॥ मध्याह्नसंध्यांगं अष्टोत्तरशतं
अष्टाविंशतिर्दशसंख्यं वा गायत्रीजपमहं करिष्ये॥ गायत्रीजपं कृत्वा॥
सꣳस्रवंतुदिशोमयि० अनेन मध्याह्नसंध्यानित्यकर्मणा भगवान्परमे-

श्वरः प्रीयताम् ॥ विष्णवे नमो विष्णवे नमो विष्णवे नमः ॥ इति मध्याह्नसंध्या समाप्ता ॥

॥ अथ सायंसंध्याप्रारंभः ॥

केशवाय नम इत्यादिप्राणायामं कृत्वा ॥ सायंसंध्या वृद्धा कृष्णा कृष्णवर्णा कृष्णवस्त्रा कृष्णगंधा कृष्णमाल्यानुलेपना गरुडवाहना विष्णुदैवत्या आहवनीयाग्न्युपस्थाना सामवेदसंहिता तृतीया विष्णुसंध्या सत्यवतीनाम्नी मम उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायंसंध्योपास्तिं करिष्ये ॥ आयांतुवरदादेवी॰सर्वादेवताआपोभूर्भुवः सुवराप ओम् ॥ अग्निश्चमामन्युश्चमन्युपतयश्चमन्युंकृतेभ्यः ॥ पापेभ्यो रक्षंतां ॥ यदह्नापापमकार्षं ॥ मनसावाचाहस्ताभ्यां ॥ पद्भ्यामुदरेणशिश्ना ॥ अहस्तदवलुंपतु ॥ यत्किंचदुरितंमयि ॥ इदमहं मामसृंतयोनौ ॥

सत्येज्योतिषिजुहोमिस्वाहा ॥ ॐकेशवाय नमः ॥ नारायणाय० ॥ द्रुपदादिवेन्मुमुचानः ॥ स्विन्नस्नात्वीमलादिव ॥ पूतंपवित्रेणेवाज्यं ॥ आपःशुंधंतुमैनंसः ॥ ॐ भूर्भुवःसुवस्तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ॐ श्रीवरुणायइदमर्घ्यं दत्तं नमम ॥ एवंत्रिःअर्घ्यंदत्वा ॥ असावादित्योब्रह्मेतिब्रह्मैवसन्ब्रह्माप्येतियएवंवेद ॥ ॐकेशवाय नमः इत्यादिप्राणायामं कृत्वा ॥ अपक्रामंतु० ओमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ सायंसंध्यांगमष्टोत्तरशतमष्टाविंशतिर्दशसंख्यं वा गायत्रीजपमहं करिष्ये ॥ गायत्रीजपं कृत्वा ॥ ॐ इमंमेवरुणश्रुधीहवमद्याचमृडय॥त्वामवस्युराचके ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः ॥ ॐत्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासि

सीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांꣳसिप्रमुमुग्ध्यस्मत् ॥ सत्वन्नोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ॥ अवयक्ष्वंनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनएधि ॥ ॐयच्चिद्धितेविशोयथाप्रदेववरुणव्रतं॥ मिनीमसिद्यविद्यवि॰सायंप्रातर्नमस्यंतिसामासंध्याअभिरक्षत्वों नमः ॥ नमःप्रतीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमउदीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमःप्राच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोदक्षिणायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमऊर्ध्वायैदिशेयाश्चदेवता॰आयुःपृथिव्यांद्रविणंब्रह्मवर्चसंमह्यंदत्वाप्रजातुंब्रह्मलोकं ॥ ॐश्रियैनमः॥संध्यायैनमः॥ विद्यायै नमः ॥ अनेन सायंसंध्याख्यकर्मणा भगवान्परमेश्वरः प्रीयताम्॥ विष्णवे नमो विष्णवे नमो विष्णवे नमः ॥

॥ अथ तृचाकल्पनमस्कारप्रारंभः ॥

श्रीगणेशाय नमः ॥ अद्येत्यादि० श्रीसवितृसूर्यनारायणप्रीत्यर्थं तृचाकल्पेन विधिना नमस्काराख्यं कर्म करिष्ये ॥ अथ ध्यानम् ॥ ध्येयः सदा सवितृमंडलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः ॥ केयूरवान्मकरकुंडलवान् किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः ॥ ॐ ह्रां उद्यन्नद्यमित्रमहः ह्रां ॐ मित्राय नमः ॥१॥ ॐ ह्रीं आरोहन्नुत्तरां दिवं ह्रीं ॐ रवये नमः ॥ २ ॥ ॐ ह्रूं हृद्रोगंममसूर्य ह्रूं ॐ सूर्याय० ॥ ३ ॥ ॐ ह्रैं हरिमाणंचनाशय ह्रैं ॐ भानवे० ॥ ४ ॥ ॐ ह्रौं शुकेषुमेहरिमाणं ह्रौं ॐ खगाय० ॥ ५ ॥ ॐ ह्रः रोपणाकासुदध्मसि ह्रः ॐ पूष्णे० ॥ ६ ॥ ॐ ह्रां अथोहारिद्रवेषुमे ह्रां ॐ हिरण्यगर्भाय० ॥७॥ ॐ ह्रीं हरिमाणंनिदध्मसि ह्रीं ॐ मरीचये० ॥ ८ ॥ ॐ

ह्रूं उदगादयमादित्यः ह्रूं ॐ आदित्या० ॥ ९ ॥ ॐ ह्रैं विश्वेनसहसा
सह ह्रैं ॐ सवित्रे० ॥ १० ॥ ॐ ह्रौं द्विषंतंममरंधयन् ह्रौं ॐ अर्का
य० ॥ ११ ॥ ॐ ह्रः मोअहंद्विषतेरंधं ह्रः ॐ भास्कराय० ॥ १२ ॥
ॐ ह्रां ह्रीं उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवं ॐ ह्रां ह्रीं मित्ररविभ्यां
नमः ॥ ॐ ह्रूं ह्रैं हृद्रोगंममसूर्यहरिमाणंचनाशय ह्रूं ह्रैं ॐ सूर्यभा
नु० ॥ ॐ ह्रौं ह्रः शुकेषुमेहरिमाणंरोपणाकासुदध्मसि ह्रौं ह्रः ॐ खगपू
पभ्यांन० ॥ ॐ ह्रां ह्रीं अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ॥ ह्रां ह्रीं
ॐ हिरण्यगर्भमरीचिभ्यां० ॥ ॐ ह्रूं ह्रैं उदगादयमादित्योविश्वेनस
हसासह ह्रूं ह्रैं ॐ आदित्यसावितृभ्यांनः ॥ ॐ ह्रौं ह्रः द्विषंतंमम
रंधयन्मोअहंद्विषतेरंधं ह्रौं ह्रः ॐ अर्कभास्कराभ्यां० ॥ ॐ ह्रां ह्रीं
ह्रूं ह्रैं उद्यन्नद्य० दिवं ॥ हृद्रो० नाशय ॥ ह्रां ह्रीं ह्रूं ह्रैं ॐ मित्रर

विसूर्यभानुभ्यो०॥ ॐ ह्रौं ह्रः ह्रां ह्रीं शुके० सुदध्मसि॥ अथोहा०नि दध्मसि॥ ह्रौं ह्रः ह्रां ह्रीं ॐ खगपूषहिरण्यगर्भमरीचि०॥ ॐ ह्रूं ह्रैं ह्रौं ह्रः उदगा० सह॥ द्विषंतं०रधं॥ ह्रूं ह्रैं ह्रौं ह्रः ॐ आदित्यसवित्रर्क भास्करेभ्योन०॥ ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः उद्यन्न० द्विषंतंममरंधयन्मोअहंद्विपतेरधं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करेभ्यो नमः इति त्रिः ॥ तृचाकल्पनमस्काराः समाप्ताः ॥

इदं पुस्तकं मुंबय्यां 'निर्णयसागर' मुद्रणयंत्रालयाधिपैः पांडुरंग जावजी इत्येतैः मुद्रापितम्. शाकः १८५२, सन १९३०.

Published by Pandurang Jawaji, Printed by Ramchandra Yesu Shedge, At the Nirnaya-sagar Press, 26-28, Kolbhat Lane, Bombay.

# अथ ऋग्वेदीया त्रिकालसंध्या ॥

किंमत १॥ आणा.

श्रीगणेशाय नमः ॥ अथभस्मधारणविधिः ॥ आचम्य प्राणायामं कृत्वा ॥ अद्येत्यादिपूर्वो॰शरीरशुद्ध्यर्थं भस्मधारणमहं करिष्ये। ॐमानं स्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्र भामितोवधीर्हविष्मंतःसदमित्वाहवामहे ॥ ( इति हस्ते भस्म गृहीत्वा जलमिश्रितं कृत्वा)॥ॐईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ शिरसि ॥ ॐतत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ मुखे ॥ ॐअघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्ते अस्तुरुद्ररूपेभ्यः ॥ हृदये॥ॐवामदेवायनमोज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकालायनमःकलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनायनमःसर्वभूतदमनायनमोमनोन्मनायनमः ॥ गुह्ये ॥

ॐसद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः॥भवेभवेनातिभवेभवस्व मां भवोद्भवायनमः ॥ पादयोः ॥ अग्निरिति भस्म । वायुरिति भस्म । जलमिति भस्म । स्थलमिति भस्म । व्योमेति भस्म । सर्वं ह वा इदं भस्म । मन एतानि चक्षूंषि भस्मानि ॥ तच्च ॥ ॐनमः शिवाय इति त्रिवारोच्चारितेन सर्वाङ्गं विलिप्य आचामेत् ॥

श्रीगणेशाय नमः ॥ ॥ अथ प्रातःसंध्याप्रारंभः ॥ केशवाय नमः । नारायणाय नमः । माधवाय नमः । गोविंदाय नमः । विष्णवे नमः । मधुसूदनाय नमः। त्रिविक्रमाय नमः । वामनाय नमः । श्रीधराय नमः। हृषीकेशाय नमः । पद्मनाभाय नमः । दामोदराय नमः । संकर्षणाय नमः । वासुदेवाय नमः । प्रद्युम्नाय नमः । अनिरुद्धाय नमः । पुरुषोत्तमाय नमः । अधोक्षजाय नमः । नारसिंहाय नमः । अच्युताय

नमः । जनार्दनाय नमः । उपेंद्राय नमः । हरये नमः । श्रीकृष्णाय नमः । प्रणवस्य परब्रह्म ऋषिः । परमात्मा देवता । दैवीगायत्री छंदः । सप्तानां व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा ऋषयः । अग्निवाय्वादित्यबृहस्पतिवरुणेंद्रविश्वेदेवा देवताः । गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुप्जगत्यश्छंदांसि । गायत्र्या विश्वामित्र ऋषिः । सविता देवता । गायत्री छंदः । गायत्रीशिरसः प्रजापतिर्ऋषिः । ब्रह्माग्निवाय्वादित्या देवताः । यजुश्छंदः । प्राणायामे विनियोगः ॥ ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ॐ आपोज्योतीरसोमृतंब्रह्मभूर्भुवःस्वरोम् ॥ ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःसंध्यामुपासिष्ये । आपोहिष्ठेति तृचस्यां

वरीपः सिंधुद्वीप ऋषिः । आपो देवता गायत्री छंदः । मार्जने विनियोगः॥ ॐआपोहिष्ठामयोभुवः॥तानऊर्जेदधातन॥महेरणायचक्षसे ॥ योवःशिवतमोरसः॥तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवः॥यस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ सूर्यश्चेति मंत्रस्य याज्ञवल्क्य उपनिषद ऋषिः । सूर्यमन्युमन्युपतिरात्रिश्च देवताः । प्रकृतिश्छंदः । मंत्राचमने विनियोगः ॥ ॐसूर्यश्चमामन्युश्चमन्युपतयश्चमन्युकृतेभ्यः ॥ पापेभ्योरक्षंताम् ॥ यद्रात्र्यापापंमकार्षं ॥ मनसावाचाहस्ताभ्यां ॥ पद्भ्यामुदरेणशिश्ना ॥ रात्रिस्तदवलुंपतु ॥ यत्किंचदुरितंमयि ॥ इदमहंमाममृतयोनौ ॥ सूर्येज्योतिषिजुहोमिस्वाहा ॥ इति जलं पीत्वा आचम्य ॥ आपोहिष्ठेति नवर्चस्य सूक्तस्यांबरीपः सिंधुद्वीप आपो गायत्री । पंचमी वर्धमाना सप्तमी

प्रतिष्ठा अंत्ये द्वे अनुष्टुभौ ॥ मार्जने विनियोगः ॥ ॐआपोहिष्ठेति ऋक्त्रयम् ॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतु नः ॥ ईशानावार्याणांक्षयंतीश्चर्षणीनाम् ॥ अपोयाचामिभेषजम् ॥ अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा ॥ अग्निंचविश्वशंभुवम् ॥ आ-पःपृणीतभेषजंवरूथंतन्वेऽममं ॥ ज्योक्चसूर्यंदृशे ॥ इदमापःप्रवह तयत्किंचदुरितंमयि ॥ यद्वाहमभिदुद्रोहयद्वाशेपउतानृतम् ॥ आपोअ द्यान्वचारिषंरसेनसमगस्महि ॥ पयस्वानग्नआगहितंमासंसृजवर्चसा ॥ (ससुपीस्तदपसोदिवानक्तंचसस्नुषीः॥ वरेण्यक्रतूरहमादेवीरवसेहुवे॥) ऋतंचेति तृचस्य सूक्तस्य माधुच्छंदसोऽघमर्षण ऋषिः । भाववृत्ति-देवता । अनुष्टुप् छंदः । अघमर्षणे विनियोगः ॥ ॐऋतंचसत्यं चाभीद्धात्तपसोध्यजायत ॥ ततोरात्र्यजायततततःसमुद्रोअर्णवः ॥ स

मुद्रादर्णवादधिसंवत्सरोऽअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिष
तोवशी ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचा
तरिक्षमथोस्वः ॥ दक्षिणनासया पापपुरुषं निरस्य तज्जलं नावलोक्य
वामभागे क्षितौ क्षिपेत् । आचम्य ॥ गायत्र्या विश्वामित्रः सविता
गायत्री । श्रीसूर्यायार्घ्यदाने विनियोगः ॥ ॐभूर्भुवःस्वः तत्सवितुर्वं०
श्रीसवितृसूर्यनारायणाय इदमर्घ्यं दत्तं न मम ॥ इति त्रिः । आच-
म्य प्राणायामं कृत्वा ॥ पृथ्वीति मंत्रस्य मेरुपृष्ठऋषिः ॥ कूर्मो देव-
ता । सुतलं छंदः । आसने विनियोगः ॥ ॐपृथ्वि त्वया धृता लोका
देवि त्वं विष्णुना धृता ॥ त्वं च धारय मां देवि पवित्रं कुरु चासन-
म् । ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभक्षणे ॥ तिष्ठ देवि शिखा-
बंधे चामुंडे ह्यपराजिते ॥ अपसर्पंतु ते भूता ये भूता भूमिसंस्थि-

ताः ॥ ये भूता विघ्नकर्तारस्ते गच्छंतु शिवाज्ञया ॥ अपक्रामंतु भूतानि पिशाचाः सर्वतोदिशम् ॥ सर्वेषामविरोधेन ब्रह्मकर्म समारभे ॥ गायत्र्या विश्वामित्र ऋषिः । सविता देवता । गायत्री छंदः । न्यासे विनियोगः । ॐ तत्सवितुर्हृदयाय नमः । वरेण्यं शिरसे स्वाहा । भर्गोदेवस्य शिखायै वषट् । धीमहि कवचाय हुम् । धियोयोनो नेत्रत्रयाय वौषट् । प्रचोदयात् अस्त्राय फट् । इति दिग्बंधः ॥ बालां बालादित्यमंडलमध्यस्थां रक्तवर्णां रक्तांबरानुलेपनस्रगाभरणां चतुर्वक्त्रां दंडकमंडल्वक्षसूत्राभयांकचतुर्भुजां हंसासनारूढां ब्रह्मदैवत्यामृग्वेदमुदाहरंतीं भूर्लोकाधिष्ठात्रीं गायत्रीं नाम देवतां ध्यायामि ॥ आगच्छ वरदे देवि जपे मे संनिधौ भव ॥ गायंतं त्रायसे यस्माद्गायत्री त्वं ततः स्मृता ॥ गायत्री जपमहं करिष्ये ॥ अष्टोत्तरशतमष्टाविंश

तिर्दशवारं वा गायत्रीं जप्त्वा ॥ पुनः तत्सवितुरिति षडंगन्यासं कृत्वा उपस्थानं कुर्यात् ॥ जातवेदसे मारीचः कश्यपो जातवेदा अग्निस्त्रिष्टुप् ॥ उपस्थाने विनियोगः ॥ ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥ मित्रोजनानिति नवर्चस्य सूक्तस्य गाथिनो विश्वामित्रः सविता त्रिष्टुप् अंत्याश्चतस्रो गायत्र्यः सूर्योपस्थाने विनियोगः ॥ ॐ मित्रोजनान्यातयतिब्रुवाणोमित्रोदाधारपृथिवीमुतद्यां ॥ मित्रःकृष्टीरनिमिषाभिचष्टेमित्रायहव्यंघृतवज्जुहोत ॥ प्रसमित्रमर्तोअस्तुप्रयस्वान्यस्तआदित्यशिक्षतिव्रतेन ॥ नहन्यतेनजीयतेत्वोतोनैनमंहोअश्नोत्यंतितोनदूरात् ॥ अनमीवासइळयामदंतोमितज्ञवोवरिमन्नापृथिव्याः ॥ आदित्यस्यव्रतमुपक्षियंतोवयंमित्रस्यसुमतौस्याम ॥ अयंमित्रोनमस्यःसुशे

वेराजासुक्षत्रोअंजनिष्टवेधाः ॥ तस्यवयंसुमतौयज्ञियस्यापिभद्रेसौम
नसेस्याम ॥ महाँआदित्योनमंसोपसद्योयातयज्ञंनोगृणतेसुशेवः ॥
तस्माएतत्पन्यंतमायजुष्टमग्नौमित्रायहविराजुहोत ॥ मित्रस्यचर्षणी
धृतोऽवोदेवस्यसानसि ॥ द्युम्नंचित्रश्रवस्तमम् ॥ अभियोमहिनादिवं
मित्रोबभूवसप्रथाः ॥ अभिश्रवोभिःपृथिवीम् ॥ मित्रायपंचयेमिरेज
नाअभिष्टिशवसे ॥ सदेवान्विश्वान्बिभर्ति ॥ मित्रोदेवेष्वायुषुजनायवृ
क्तबर्हिषे ॥ इषइष्टव्रताअकः ॥ त्र्यंबकं मैत्रावरुणिर्वसिष्ठो रुद्रोऽनु-
ष्टुप् । उपस्थाने विनियोगः ॥ ॐत्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनम् ॥
उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ तच्छंयोः शंयुर्विश्वेदेवाः
शक्वरी । उपस्थाने विनियोगः ॥ ॐतच्छंयोरावृणीमहेगातुंयज्ञायगा-
तुंयज्ञपतयेदैवीस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुभेष-

जम् ॥ शंनोअस्तुद्विपदेशंचतुष्पदे ॥ नमो ब्रह्मणे प्रजापतिर्विश्वेदेवा जगती । उपस्थाने विनियोगः ॥ ॐनमोब्रह्मणेनमोअस्त्वग्नयेनमः पृथिव्यैनमओषधीभ्यः ॥ नमोवाचेनमोवाचस्पतयेनमोविष्णवेमहतेकरोमि ॥ प्राच्यै दिशे इंद्राय च नमः । आग्नेय्यै दिशे अग्नये च नमः । दक्षिणस्यै दिशे यमाय च नमः । नैर्ऋत्यै दिशे निर्ऋतये च नमः । प्रतीच्यै दिशे वरुणाय च नमः । वायव्यै दिशे वायवे च नमः । उदीच्यै दिशे सोमाय च नमः। ईशान्यै दिशे ईश्वराय च नमः । ऊर्ध्वायै दिशे ब्रह्मणे च नमः । अधरस्यै दिशे अनंताय च नमः । संध्यायै नमः । गायत्र्यै नमः । सावित्र्यै नमः । सरस्वत्यै नमः । सर्वाभ्यो देवताभ्यो नमः ॥ यां सदा सर्वभूतानि स्थावराणि चराणि च ॥ सायं प्रातर्नमस्यंति सा मा संध्याऽभिरक्षतु ॥ अमुक

गोत्रामुकप्रवरोत्पन्नोऽहममुकशर्मा भो गुरो त्वामभिवादयामि ॥
उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि ॥ ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ
देवि यथासुखम् ॥ भद्रंनोअपिवातयमनः ॥ ॐशांतिःशांतिःशांतिः ॥
प्रदक्षिणं परिभ्रमन् । आसत्यलोकादापातालादालोकालोकपर्वतात् ॥
ये संति ब्राह्मणा देवास्तेभ्यो नित्यं नमो नमः ॥ इति गुरूनभिवा-
दयेत् । अनेन प्रातःसंध्यावंदनेन कर्मणा श्रीपरमेश्वरः प्रीयतां ॥
ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ ॥ ॥ ॥
श्रीगणेशाय नमः ॥ आचम्य प्राणानायम्य ॥ ममोपात्तदुरितक्षय-
द्वारा श्रीपरमेश्वरप्रीत्यर्थं मध्याह्नसंध्यामुपासिष्ये ॥ आपोहिष्ठेति
तृचेन पूर्ववत्प्रथमं मार्जनं कृत्वा मंत्राचमनं कार्यं ॥ आपः पुनं-
त्वित्यस्यानुवाकस्य नारायण आपो अष्टिः मंत्राचमने विनियोगः ॥

ॐ आपः पुनंतुपृथिवींपृथिवीपूतापुंनातुमां ॥ पुनंतुब्रह्मणस्पतिर्ब्रह्म पूतापुंनातुमां ॥ यदुच्छिष्टमभोज्यंयद्वादुश्चरितंमम ॥ सर्वंपुनंतुमामापोसतांचप्रतिग्रहꣳस्वाहा ॥ इति अपः पीत्वा । आचम्य प्रातःसंध्यावत् द्वितीयं मार्जनं अघमर्षणांतं कृत्वा ॥ हंसःशुचिषदिति मंत्रस्य गोतमो वामदेवः सूर्यो जगती ॥ अर्घ्यदाने विनियोगः ॥ ॐहंसः शुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतं ॥ श्रीसूर्याय इदमर्घ्यं दत्तं न मम ॥ आत्मानं परिषिच्य द्विराचम्य ॥ ऊर्ध्वबाहुरुन्मुखःसूर्यमुपतिष्ठेत ॥ उदुत्यमिति त्रयोदशर्चस्य सूक्तस्य काण्वः प्रस्कण्व ऋषिः श्रीसूर्यो देवता नवाद्या गायत्र्यः अंत्याश्चतस्रोनुष्टुभः ॥ चित्रं देवानामिति षड्चस्य सूक्तस्य आंगिरसः कुत्सः सूर्यस्त्रिष्टुप् सूर्योपस्थाने

विनियोगः ॥ ॐउदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥
अपत्येतायवोयथानक्षत्रायंत्यक्तुभिः ॥ सूरायविश्वचक्षसे ॥ अदृश्रम
स्यकेतवोविरश्मयोजनाँअनु ॥ भ्राजंतोअग्नयोयथा ॥ तरणिर्विश्वद
र्शतोज्योतिष्कृदसिसूर्य ॥ विश्वमाभासिरोचनं ॥ प्रत्यङ्देवानांविशः
प्रत्यङ्ङुदेषिमानुपान् ॥ प्रत्यङ्विश्वंस्वर्दृशे ॥ १ ॥ येनापावकचक्ष
साभुरण्यंतंजनाँअनु ॥ त्वंवरुणपश्यसि ॥ विद्यामेषिरजस्पृथ्वहामि
मानोअक्तुभिः ॥ पश्यन्जन्मानिसूर्य ॥ सप्तत्वाहरितोरथेवहंतिदेव
सूर्य ॥ शोचिष्केशंविचक्षण ॥ अयुक्तसप्तशुंध्युवःसूरोरथस्यनप्त्यः ॥
ताभिर्यातिस्वयुक्तिभिः ॥ उद्वयंतमसस्परिज्योतिष्पश्यंतउत्तरं ॥ देवं
देवत्रासूर्यमगन्मज्योतिरुत्तमं ॥ उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवं ॥
हृद्रोगंममसूर्यहरिमाणंचनाशय ॥ शुकेषुमेहरिमाणंरोपणाकासुदध्म

सि ॥ अथोहारिद्रवेपुमेहरिमाणंनिदंध्मसि ॥ उदगादुयमादित्योवि
श्वेनसहंसासह ॥ द्विषंतंमह्यंरंधयन्मोअहंद्विषतेरधं ॥ २ ॥ चित्रंदेवा
नामुदगानदींकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावांपृथिवीअंतरिं
क्षंसूर्यआत्माजगतस्तस्थुषश्च ॥ सूर्योदेवीमुषसंरोचमानांमर्योनयोषां
मभ्येतिपश्चात् ॥ यत्रानरोदेवयंतोयुगानिवितन्वतेप्रतिभद्रायभद्रं ॥
भद्राअश्वाहरितःसूर्यस्यचित्राएतग्वाअनुमाद्यासः ॥ नमस्यंतोदिवआ
पृष्ठमस्थुःपरिद्यावांपृथिवीयंतिसद्यः ॥ तत्सूर्यस्यदेवत्वंतन्महित्वंमध्या
कर्तोविततंसंजभार ॥ यदेदयुक्तहरितःसधस्थादाद्रात्रीवासस्तनुतेसि
मस्मै ॥ तन्मित्रस्यवरुणस्याभिचक्षेसूर्योरूपंकृणुतेद्योरुपस्थे ॥ अनंत
मन्यद्रुशदस्यपाजःकृष्णमन्यद्धरितःसंभरंति ॥ अद्यादेवाउदितासूर्य
स्यनिरंहसःपिपृतानिरवद्यात् ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिं

र्धुः पृथिवीउतद्यौः ॥ ३ ॥ इत्युपस्थाय उपविश्याचम्य प्राणायामं कृत्वा ॥ युवतीं युवादित्यमंडलमध्यस्थां श्वेतवर्णां श्वेतांबरानुलेपनस्रगाभरणां चतुर्वक्त्रां प्रतिवक्त्रंत्रिनेत्रां चंद्रशेखरां त्रिशूलखड्गखट्वांगडमरुकचतुर्भुजां वृषभासनारूढां रुद्रदैवत्यां यजुर्वेदमुदाहरंतीं भुवर्लोकाधिष्ठात्रीं नामदेवतां ध्यात्वा संपूज्य यथाशक्ति जपं कुर्यात् ॥ अन्यत् प्रातःसंध्यावत् ॥ इति मध्याह्नसंध्या ॥ ॥

श्रीगणेशाय नमः ॥ अथ सायंसंध्याप्रारंभः॥ प्रातःकालवदाचमनं प्राणायामं च कुर्यात् ॥ सायंसंध्या वृद्धा कृष्णा कृष्णवर्णा कृष्णवस्त्रा कृष्णगंधा कृष्णमाल्यानुलेपना गरुडवाहना विष्णुदैवत्या आहवानीयाग्न्युपस्थाना सामवेदसंहिता तृतीया विष्णुसंध्या सत्यवती नाम्नी ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायंसंध्योपास्तिं

करिष्ये ॥ ततः प्रथममार्जनपर्यंतं प्रातःकालवत् ॥ अग्निश्चेति मंत्रस्य ॥ याज्ञवल्क्य उपनिषद् ऋषिः ॥ अग्निमन्युमन्युपतयोऽहश्च देवताः ॥ प्रकृतिश्छंदः ॥ मंत्राचमने विनियोगः ॥ ॐअग्निश्चमामन्युश्चमन्युपतयश्चमन्युंकृतेभ्यः ॥ पापेभ्योरक्षंताम् ॥ यदह्नापापंमकार्षं ॥ मनसावाचाहस्ताभ्यां ॥ पद्भ्यामुदरेणशिश्ना ॥ अहस्तदवलुंपतु ॥ यत्किंचंदुरितंमयि ॥ इदमहंमाममृतयोनौ ॥ सत्येज्योतिषिजुहोमिस्वाहा ॥ आचम्य० ॥ प्रातःकालवदापोहिष्ठेति नवर्भिमार्जनं कृत्वा ॥ तथा गायत्रीमंत्रेण वरुणाय त्रिवारमर्घ्यं दत्वा ॥ असावादित्यो ब्रह्म ॥ द्विराचमनं प्राणायामं च कृत्वा ॥ प्रातःकालवत् दिग्वंधासनं षडंगं तथा च गायत्रीजपः ॥ पुनश्च षडंगं कृत्वा यच्चिद्धितेइति दशर्चामाजीगर्तिःशुनःशेपःसकृत्रिमो वैश्वामित्रो देवरात ऋषिः वरुणो देवता गाय

त्रीछंदः वरुणोपस्थाने वि० ॥ ॐयच्चिद्धितेविशोयथाप्रदेववरुणव्रतं ॥
मिनीमसिद्यविद्यवि ॥ मानोवधायहत्नवेजिहीळानस्यरीरधः ॥ माहृ
णानस्यमन्यवे ॥ विमृळीकायतेमनोरथीरश्वंनसंदितं ॥ गीर्भिर्वरुण
सीमहि ॥ पराहिमेविमन्यवःपतंतिवस्यइष्टये ॥ वयोनवसतीरुप ॥ क
दाक्षत्रश्रियंनरमावरुणंकरामहे ॥ मृळीकायोरुचक्षसं ॥ १ ॥ तदित्स
मानमाशातेवेनंतानप्रयुच्छतः ॥ धृतव्रतायदाशुषे ॥ वेदायोवीनांपद
मंतरिक्षेणपततां ॥ वेदनावःसमुद्रियः ॥ वेदमासोधृतव्रतोद्वादशप्र
जावतः ॥ वेदायउपजायते ॥ वेदवातस्यवर्तनिमुरोर्ऋष्वस्यबृहतः ॥
वेदायेअध्यासते ॥ निषसादधृतव्रतोवरुणःपस्त्यास्वा ॥ साम्राज्या
यसुक्रतुः ॥ यांसदास०इतःप्रातःकालसंध्यावत् ॥ इति सायंसंध्या ॥

इदं पुस्तकं पांडुरंग जावजी इत्येतैः स्वीये निर्णयसागरमुद्रणालये
मुद्रयित्वा प्रकाशितम्. शाके १८५२ सन १९३०.

॥ इति ऋग्वेदीया त्रिकालसंध्या ॥

पब्लिशर–पाडुरंग जावजी,
प्रिन्टर–रामचंद्र येसू शेडगे

निर्णयसागर प्रेस,
नं० २६।२८ कोलभाट लेन, मुंबई.

# ॥ अथ हिरण्यकेशीयो नित्यविधिः ॥

मूल्यं ५ आणकाः ।

## ॥ हिरण्यकेशीयनित्यविधेरनुक्रमणिका ॥

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ अथ स्नानविधिः ॥ नमामि गंगे तव पादपंकजं सुरासुरैर्वंदितदिव्यरूपम् ॥ भुक्तिं च मुक्तिं च ददासि नित्यं भावानुसारेण सदा नराणाम् ॥ १ ॥ दर्शनात्सर्वपापघ्नीं स्पर्शनान्मोक्षदायिनीम् ॥ स्नानेन मुक्तिदां पुण्यां भागीरथीं नमाम्यहम् ॥ २ ॥ आचम्य । प्राणानायम्य । विष्णवे नमो विष्णवे नमो विष्णवे नमः॥ विष्णुर्विष्णुः॥ श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य ब्रह्मणो द्वितीये परार्धे विष्णुपदे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वंतरे भरतवर्षे भरतखंडे जंबुद्वीपे दंडकारण्ये देशे गोदावर्याः दक्षिणे तीरे कृष्णावेण्योरुत्तरे तीरे शालिवाहनशके बौद्धावतारे रामक्षेत्रे रामरामाश्रमे अस्मिन्वर्तमाने अमुकनामसंवत्सरे अमुकअयने अमुकऋतौ अमुकमासे अमुकपक्षे अमुक-

तिथौ अमुकवासरे अमुकनक्षत्रे अमुकस्थे वर्तमाने चंद्रे अमुकस्थे श्रीसूर्ये अमुकस्थे देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं कायिकवाचिकमानसिकसांसर्गिकज्ञाताज्ञातस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपापक्षयार्थं गंगाभागीरथीतीर्थे प्रातःस्नानमहं करिष्ये॥ हिरंण्यशृंगंवरुंणंप्रपंद्येतीर्थंमेदेहियाचितः ॥ यन्मयांभुक्तमसाधूनांपापेभ्यश्चप्रतिग्रहः ॥ यन्मेमनंसावाचाकर्मणावादुष्कृतंकृतम् ॥ तन्नइंद्रोवरुंणोबृहस्पतिःसवितांचपुनंतुपुनःपुनंः ॥ नमोग्नयेप्सुमतेनमइंद्रांयनमोवरुंणायनमोवारुण्यैनमोद्भ्यः॥ यदपांक्रूरंयदंमेध्यंयदंशांतंतदपंगच्छतात् ॥ अत्याशनादतीपानाद्यच्चउग्रात्प्रतिग्रहात् ॥ तन्नोवरुंणोराजा-

पाणिनोह्यवमर्शंतु ॥ सोहमपापोविरजोनिर्मुक्तोमुक्तकिल्विषः ॥ नाकं-
स्यपृष्ठमारुह्यगच्छेद्ब्रह्मसलोकताम्॥ यश्चाप्सुवरुणःसपुनात्वघमर्षणः॥
तीक्ष्णदंष्ट्रमहाकाय कल्पांतदहनोपम॥भैरवाय नमस्तुभ्यमनुज्ञां दातु-
मर्हसि ॥ सागरस्वननिर्घोष दंडहस्तासुरांतक ॥ जगत्स्रष्टर्जगन्मर्दि-
न्नमामि त्वां सुरेश्वर ॥ इमं मंत्रं समुच्चार्य तीर्थे स्नानं समाचरेत् ॥ अ-
न्यथा तत्फलस्यार्धं तीर्थेशो हरति ध्रुवम् ॥ स्नानं कृत्वा ॥ इमंमेगंगेयमु
नेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्णिया ॥ असिक्नियामरुद्वृधेवित-
स्तयार्जीकीयेशृणुह्यासुषोमया॥ अघमर्षणम्॥ ऋतंचसत्यंचाभीद्धात्त-
पसोध्यजायत॥ ततोरात्रिरजायततततःसमुद्रोअर्णवः। समुद्रादर्णवाद-
धिसंवत्सरोअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ सूर्या-
चंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचांतरिक्षमथोसुवः

॥१॥ऋतंचसत्यं०इतित्रिरावृत्त्याघमर्षणंकुर्यात् ॥ आपोहिष्ठामयोभुव
स्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजय
तेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥
आपोजनयथाचनः ॥ नमः कमलनाभाय नमस्ते जलशायिने ॥ न-
मस्ते केशवानंत गृहाणार्घ्यं नमोस्तु ते ॥ एहि सूर्य सहस्रांशो तेजोरा-
शे जगत्पते ॥ अनुकंपय मां भक्त्या गृहाणार्घ्यं नमोस्तु ते ॥ ब्रह्मकमंड-
लूद्भूते गंगे त्रिपथगामिनि ॥ त्रैलोक्यवंदिते देवि गृहाणार्घ्यं नमोस्तु
ते ॥ ३ ॥ तपनस्य सुते देवि यमुने च महानदि ॥ शुद्धानां शुद्धये
देवि गृहाणार्घ्यं नमोस्तु ते ॥४॥ किरणा धूतपापा च पुण्यतोया सर-
स्वती ॥ गंगा च यमुना चैव गृहाणार्घ्यं नमोस्तु ते ॥५॥ पापोहं पाप-
कर्माहं पापात्मा पापसंभवः ॥ त्राहि मां कृपया गंगे सर्वपापहरा भव ॥

(पुनश्च स्नानंकृत्वा) अद्यपूर्वोच्चरितवर्तमानएवंगुणविशेषणविशिष्टा-
यां शुभपुण्यतिथौ ॥ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं
स्नानांगं देवर्षिपितृतर्पणं करिष्ये ॥ तान्देवांस्तर्पयामि ॥ भूर्देवांस्तर्प-
यामि ॥ भुवर्देवांस्तर्पयामि ॥ सुवर्देवांस्तर्पयामि ॥ भूर्भुवःसुवर्देवांस्त-
र्पयामि ॥ निवीती ॥ तान् ऋषींस्तर्पयामि ॥ भूर्ऋषींस्तर्पयामि ॥
भुवर्ऋषींस्तर्पयामि ॥ सुवर्ऋषींस्तर्पयामि ॥ भूर्भुवःसुवर्ऋषींस्तर्पया-
मि ॥ प्राचीनावीती ॥ तान् पितॄंस्तर्पयामि ॥ भूःपितॄंस्तर्पयामि ॥ भु-
वःपितॄंस्तर्पयामि ॥ सुवःपितॄंस्तर्पयामि ॥ भूर्भुवःसुवःपितॄंस्तर्पयामि ॥
अनेन तर्पणेन श्रीपरमेश्वरः प्रीयताम् ॥ यन्मया दूषितं तोयं शारीरम-
लसंभवात् ॥ तद्दोषपरिहारार्थं यक्ष्माणं तर्पयाम्यहम् ॥ वस्त्रपरिधानं
कुर्यात् ॥ इति स्नानविधिः समासः ॥ ॥ ॥

## ॥ अथ विभूतिधारणमंत्रः ॥

श्रीगणेशाय नमः॥ (हस्ते भस्म जलं च गृहीत्वा ) ॐईशानःसर्वविद्या
नामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुस
दाशिवोम् ॥ शिरसि ॥ ॐतत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरु
द्रःप्रचोदयात्॥ मुखे ॥ ॐअघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वे
भ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः॥हृदये॥ ॐवामदेवायनमोज्ये-
ष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकालायनमः कलविकरणायनमोबलवि
करणायनमोबलायनमोबलप्रमथनायनमः सर्वभूतदमनायनमोमन
न्मनायनमः॥गुह्ये॥ॐसद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः॥ भ-
वेभवेनातिभवेभवस्वमांभवोद्भवायनमः॥ पादयोः॥ अग्निरिति भस्म ॥
वायुरिति भस्म ॥ जलमिति भस्म ॥ स्थलमिति भस्म ॥ व्योमेति भस्म॥

सर्वꣳह्यवाइदं भस्म॥ ॐमानस्तोकेतनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतोनमसाविधेमते ॥ इतिसर्वांगे भस्म विलिप्य ॥ आचम्य ॥ केशवादिप्राणायामं कृत्वा ॥

## ॥ अथ प्रातःसंध्या ॥

श्रीगणेशाय नमः ( प्राङ्मुख उदङ्मुखो वा कुशासने ऊर्णासने वोपविश्य ) ( उत्तमा तारकोपेता मध्यमा लुप्ततारका ॥ अधमा सूर्यसहिता प्रातःसंध्या त्रिधा मता ) ॥ ॐ केशवाय नमः ॥ नारायणाय नमः ॥ माधवाय नमः ॥ गोविंदाय नमः ॥ विष्णवे नमः ॥ मधुसूदनाय नमः ॥ त्रिविक्रमाय नमः ॥ वामनाय नमः ॥ श्रीधराय नमः ॥ हृषीकेशाय नमः॥ पद्मनाभाय नमः ॥ दामोदराय नमः ॥ संकर्षणाय नमः ॥ वासुदेवाय नमः ॥ प्रद्युम्नाय नमः ॥ अनिरुद्धाय

नमः ॥ पुरुषोत्तमाय नमः ॥ अधोक्षजाय नमः ॥ नारसिंहाय नमः॥ अं-
च्युताय नमः ॥ जनार्दनाय नमः ॥ उपेंद्राय नमः ॥ हरये नमः ॥ श्रीकृ-
ष्णाय नमः ॥ ॐभूः ॥ ॐभुवः ॥ ॐस्सुवः ॥ ॐ महः ॥ ॐ जनः ॥
ॐ तपः ॥ ॐस्सत्यम् ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥
धियोयोनःप्रचोदयात् ॥ ॐमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरो-
म् ॥ प्रातःसंध्या कुमारी रक्ता रक्तवर्णा रक्तवस्त्रा रक्तगंधा
रक्तमाल्यानुलेपना हंसवाहना ब्रह्मदैवत्या गार्हपत्याभ्युपस्थाना
ऋग्वेदसंहिता प्रथमा ब्रह्मसंध्या वेदवतीनाम्नी ॥ ममोपा-
त्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःसंध्योपास्तिं करिष्ये ॥
आयातुवरदादेवीअक्षरंब्रह्मसंमितम् ॥ गायत्रींछंदसांमातेदं ब्रह्म-
जुषस्वमे ॥ यदह्नात्कुरुतेपापंतदह्नात्प्रतिमुच्यते ॥ यद्रात्रियात्कुरु

तेपापंतद्रात्रियांप्रतिमुच्यते ॥ सर्वंवर्णेमहादेविसंध्याविद्येसरस्वति ॥
अजरेअमरेदेविसर्वदेविनमोस्तुते॥ॐओजोसिसहोसिवलमसिभ्राजो
सिदेवानांधामनामासिविश्वमसिविश्वायुःसर्वमसिसर्वायुरभिभूरोंगाय
त्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि छंदर्षीनावा
हयामि श्रियमावाहयामि ह्रियमावाहयामि ॥ ॐआपोहिष्ठामयोभुव
स्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाज
यतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्व
थ ॥ आपोजनयथाचनः ॥ आपोवाइदꣳसर्वविश्वाभूतान्यापःप्राणावा
आपःपशवआपोन्नमापोमृतमापःसम्राडापोविराडापःस्वराडापश्छंदा
ꣳस्यापोज्योतीꣳष्यापोयजूꣳष्यापःसत्यमापःसर्वादेवताआपोभूर्भुवः
सुवरापओम् ॐ सूर्यश्चमामन्युश्चमन्युपतयश्चमन्युकृतेभ्यः॥पापेभ्योर

क्षंतां॥यद्रात्रियापापंमकार्षं ॥ मनसावाचाहस्ताभ्याम् ॥ पद्भ्यामुदरेणशि
श्ना ॥ रात्रिस्तदंवलुंपतु ॥ यत्किंचदुरितंमयि ॥ इदमहंमाममृतयोनौ ॥
सूर्येज्योतिषिजुहोमिस्वाहा ॥ ॐकेशवायनमः० ॥ श्रीकृष्णायनमः ॥
ॐ भूः ॥ ॐ भुवः० ॥ ॐतत्सवि० ॥ ॐमापोज्योतीरसोमृतंब्रह्मभूर्भु
वःसुवरोम् ॥ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमु
खाकरत्प्रणआयूंषिपितारिषत् ॥ आपोहिष्ठामयोभुवस्तानऊर्जेदधात
न ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशती
रिवमातरः॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाच-
नः ॥ हिरण्यवर्णाःशुचयःपावकायासुजातःकश्यपोयास्विंद्रः ॥ अग्निंया
गर्भंदधिरेविरूपास्तानआपःशंस्योनाभवंतु ॥ यासांराजावरुणो-
यातिमध्येसत्यानृतेअवपश्यंजनानाम् ॥ मधुश्चुतःशुचयोयाःपावका-

स्तानआपःशꣳस्योनाभवंतु ॥ यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षे-
वहुधाभवंति ॥ याःपृथिवींपयसोंदंतिशुक्रास्तानआपःशꣳस्योनाभ-
वंतु ॥ शिवेनमाचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥
सर्वांꣳअग्नीरंप्सुषदोहुवेवोमयिवर्चोवलमोजोनिधत्त ॥ पवमानःसुव
र्जनः ॥ पवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ पुनंतुमादेवज
नाः ॥ पुनंतुमनवोधिया ॥ पुनंतुविश्वआयवः ॥ जातवेदःपवित्रवत् ॥
पवित्रेणपुनाहिमा ॥ शुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतुꣳरनु ॥
यत्तेपवित्रमर्चिषि ॥ अग्नेवितंतमंतरा ॥ ब्रह्मतेनपुनीमहे ॥ उभाभ्यां
देवसवितः ॥ पवित्रेणसवेनच ॥ इदंब्रह्मपुनीमहे ॥ वैश्वदेवीपु
नतीदेव्यागात् ॥ यस्यैवह्वीस्तनुवोवीतपृष्ठाः ॥ तयामदंतःसधमाद्ये-
षु ॥ वयꣳस्यामपतयोरयीणाम् ॥ वैश्वानरोरश्मिभिर्मापुनातु ॥ वातः

प्राणेनैषिरोमयोभूः ॥ द्यावापृथिवीपयसापयोभिः ॥ ऋतावरीयज्ञियेमा-
पुनीताम् ॥ बृहद्भिःसवितस्तृभिः ॥ वर्षिष्ठैर्देवमन्मभिः ॥ अग्नेदक्षैःपु-
नाहिमा ॥ येनदेवाअपुनत ॥ येनापोदिव्यंकशः ॥ तेनदिव्येनब्रह्मणा ॥
इदंब्रह्मपुनीमहे ॥ यःपावमानीरध्येति ॥ ऋषिभिःसंभृतꣳरसम् ॥
सर्वꣳसपूतमश्नाति ॥ स्वदितंमातरिश्वना ॥ पावमानीर्योअध्येति ॥
ऋषिभिःसंभृतꣳरसम् ॥ तस्मैसरस्वतीदुहे ॥ क्षीरꣳसर्पिर्मधूदकं ॥
पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिपयस्वतीः ॥ ऋषिभिःसंभृतोरसः ॥
ब्राह्मणेष्वमृतꣳहितम् ॥ पावमानीर्दिशंतुनः ॥ इमंलोकमथोअमुम् ॥
कामान्त्समर्धयंतुनः ॥ देवीर्देवैःसमाभृताः ॥ पावमानीःस्वस्त्ययनीः ॥
सुदुघाहिघृतश्चुतः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतꣳहितम् ॥
येनदेवाःपवित्रेण ॥ आत्मानंपुनतेसदा ॥ तेनसहस्रधारेण ॥ पावमा

न्यःपुनंतुमा ॥ प्राजापत्यंपवित्रम् ॥ शतोद्यामꣳहिरण्मयंम् ॥ तेनंब्रह्म विदोवयम् ॥ पूतंब्रह्मपुनीमहे॥इंद्रःसुनीतीसहमापुनातु ॥ सोमस्वस्त्या वरुणःसमीच्यो ॥ यमोराजाप्रमृणाभिःपुनातुमा ॥ जातवेदामोर्जयंत्या पुनातु ॥ द्रुपदादिवेन्मुमुचानः ॥ स्विन्नस्नात्वीमलादिव ॥ पूतं पवित्रेणे- वाज्यम् ॥ आपःशुंधंतुमैनसः॥आचम्यप्राणानायम्य ॥ ॐभूर्भुवःसुव- स्तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ श्रीसू- र्याय इदमर्घ्यं दत्तं न मम ॥ ॐ भूर्भुवःसुवस्तत्सवितुर्वरेण्यंभ र्गोदेव स्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ श्रीसूर्याय इदमर्घ्यं दत्तं न मम॥ ॐ भूर्भुवःसुवस्तत्सवितुर्वरेण्यं भर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचो- दयात् ॥ श्रीसूर्याय इदमर्घ्यं दत्तं न मम ॥ असावादित्योब्रह्मेतिब्रह्मैवस- न्ब्रह्माप्येतियएवंवेद ॥ केशवाय नमः० श्रीकृष्णाय नमः ॥ प्राणायामं

कृत्वा ॥ अपक्रामंतु पिशाचा ये भूता भूमिपालकाः ॥ भूतानामवरोधेन ब्रह्मकर्म समारभे ॥ पृथ्वीति मंत्रस्य मेरुपृष्ठ ऋषिः कूर्मो देवता सुतलं छंदः आसने विनियोगः ॥ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ अंगुष्ठाग्रे तु गोविंदं तर्जन्यां तु महीधरं ॥ मध्यमायां हृषीकेशमनामिक्यां त्रिविक्रमम् ॥ कनिष्ठिक्यां न्यसेद्विष्णुं करमध्ये तु माधवम् ॥ एवं च करविन्यासं सर्वपापप्रणाशनम् ॥ ॐ भूः पादाभ्यां नमः ॥ ॐ भुवः जानुभ्यां नमः ॥ ॐ सुवः कटिभ्यां नमः ॥ ॐ महः नाभ्यै नमः ॥ ॐ जनः हृदयाय नमः ॥ ॐ तपः कंठाय नमः ॥ ॐ सत्यं ललाटाय नमः ॥ ॐ परब्रह्म शिरसे स्वाहा ॥ ॐ तत्सवितुर्ब्रह्मात्मने हृदयाय नमः ॥ ॐ वरेण्यं विष्ण्वात्मने शिरसे स्वाहा ॥ ॐ भर्गोदेवस्य रुद्रात्मने शिखायै वषट् ॥ ॐ धीमहि परमा-

त्मने कवचाय हुं ॥ ॐ धियोयोनो ज्ञानात्मने नेत्रत्रयायवौषट् ॥ ॐ प्रचोदयात्सत्यात्मने अस्त्राय फट् ॥ इतिदिग्बंधः गायत्र्या गायत्रीच्छंदो विश्वामित्रऋषिः सविता देवताग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयꣳरुद्रः शिखा पृथिवी योनिः प्राणापानव्यानोदानसमाना सप्राणा श्वेतवर्णा सांख्यायनसगोत्रा गायत्री चतुर्विꣳशत्यक्षरा त्रिपदाषट्कुक्षिः पंचशीर्षोपनयने विनियोगः ॐ भूः ॐ भुवः ॐ ꣳसुवः ॐ महः ॐ जनः ॐ तपः ॐ ꣳसत्यम् ॥ ओंतत्सवितुर्वरेण्यं भर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥ ओमापोज्योतीरसोमृतं ब्रह्म भूर्भुवःसुवरों ॥ प्रातःसंध्यांगत्वेनाष्टोत्तरशतमष्टाविंशतिर्दशसंख्यं वा गायत्रीजपमहं करिष्ये ॥ ॐ भूर्भुवःसुवस्तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ इति गायत्रीं जप्त्वा ॥ ॐ तत्सवितुर्ब्रह्मात्मने हृदयाय नमः ॥

वरेण्यंविष्ण्वात्मने शिरसेस्वाहा॥ भर्गोदेवस्यरुद्रात्मने शिखायै वषट्॥
धीमहि परमात्मने कवचाय हुम्॥ धियोयोनो ज्ञानात्मने नेत्रत्रयाय वौ-
षट्॥ प्रचोदयात्सत्यात्मने अस्त्रायफट्॥ इति दिग्बंधः॥ ॐमित्रस्यचर्ष
णीधृतश्रवोदेवस्यसानसिं ॥ सत्यंचित्रश्रवस्तमं ॥ मित्रोजनान्यातय
तिप्रजानन्मित्रोदाधारपृथिवीमुतद्यां ॥ मित्रःकृष्टीरनिमिषाभिचष्टेस
त्यायहव्यंघृतवद्विधेम ॥ प्रसमित्रमर्तोअस्तुप्रयस्वान्यस्तआदित्यशि-
क्षतिव्रतेन॥ नहन्यतेनजीयतेत्वोतोनैनमंहोअश्नोत्यंतितोनदूरात्॥
यच्चिद्धितेविशोयथाप्रदेववरुणव्रतं ॥ मिनीमसिद्यविद्यवि ॥ यत्किंचेदं
वरुणदैव्येजनेभिद्रोहंमनुष्याश्चरामसि ॥ अचित्तीयत्तवधर्मायुयोपिम
मानस्तस्मादेनसोदेवरीरिषः॥ कितवासोयद्रिरिपुर्नदीवियद्वाघासत्यमु
तयन्नविद्म॥ सर्वाताविष्यशिथिरेवदेवाथातेस्यामवरुणप्रियासः॥ या९

सदासर्वैभूतानिस्थावराणिचराणिंच ॥ सायंप्रातर्नमस्यंतिसामासंध्यां अभिरक्षत्वोंनमः ॥ नमःप्राच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येता भ्यश्चनमोदक्षिणायैदिशे याश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमो नमःप्रतीच्यैदिशे याश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमउदी च्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमऊर्ध्वायैदिशेया श्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोधरायैदिशे याश्चदेवताए तस्यांप्रतिवसंत्येताभ्यश्च नमोनमोवांतरायैदिशेयाश्चदेवताएतस्यांप्र तिवसंत्येताभ्यश्चनमोनमोगंगायमुनयोर्मध्येयेवसंतिते मेप्रसन्नात्मा नश्चिरंजीवितंवर्धयंतिनमोगंगायमुनयोर्मुनिभ्यश्चनमोनमोगंगायमु- नयोर्मुनिभ्यश्चनमः ॥ अवांतरदिशाभ्यो नमः ॥ सऽंस्रवंतुदिशोमयि सामागच्छंतुसूनृताः ॥ सर्वैकामाअभियंतुनःॐप्रियाअभिस्रवंतुनः ॥

ॐ प्रियाअभिवादये ॥ अमुकप्रवरान्वितामुकगोत्रोत्पन्नः यजुर्वेदस्यतै-
त्तिरीयशाखांतर्गतहिरण्यकेशीशाखाध्यायी अमुकशर्माहं भोः अभिवा-
दयामि ॥ नमोब्रह्मण्यदेवायगोब्राह्मणहिताय च ॥ जगद्धिताय कृष्णा-
य गोविंदाय नमोनमः ॥ उत्तमेशिखरेजातेभूम्यांपर्वतमूर्धनि ॥ ब्राह्मणे-
भ्योभ्यनुज्ञातागच्छदेवियथासुखं ॥ स्तुतोमयावरदावेदमाताप्रचोदयं-
तीपवनेद्विजाता ॥ आयुःपृथिव्यांद्रविणंब्रह्मवर्चसंमह्यंदत्वाप्रजातुंब्रह्म
लोकं ॥ घृणिःसूर्यआदित्योनप्रभावात्यक्षरं ॥ मधुक्षरंतितद्रसं ॥ सत्यंवै
तद्रसमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ श्रियै नमः ॥ संध्यायै
नमः ॥ विद्यायै नमः । गुरुभ्यो नमः । वेदाय नमः । वेदपुरुषाय नमः ॥
सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमो नमः । आका-
शात्पतितं तोयं यथा गच्छति सागरम् ॥ सर्वदेवनमस्कारः केशवं

प्रति गच्छति ॥ ॐ केशवाय नम इत्यादिप्राणायामं कृत्वा ॥ अनेन प्रातःसंध्यानित्यकर्मणा भगवान् परमेश्वरः प्रीयताम् ॥ विष्णवे नमो विष्णवे नमो विष्णवे नमः ॥ इति प्रातःसंध्या समाप्ता ॥

## ॥ अथ मध्याह्नसंध्याप्रारंभः ॥

ॐ केशवाय नम इत्यादि प्राणायामं कृत्वा ॥ मध्याह्नसंध्या युवाना श्वेता श्वेतवर्णा श्वेतवस्त्रा श्वेतगंधा श्वेतमाल्यानुलेपना वृषभवाहना रुद्रदैवत्या दक्षिणाभ्युपस्थाना यजुर्वेदसंहिता द्वितीया रुद्रसंध्या धर्मवतीनाम्नी मम उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं मध्याह्नसंध्योपास्तिं करिष्ये ॥ आयांतुवरदादेवी॰ सर्वादेवताआपोभूर्भुवःसुवरापॐ ॥ आपःपुनंतुपृथिवींपृथिवीपूतापुनातुमां ॥ पुनंतुब्रह्मणस्पतिर्ब्रह्मपूतापुनातुमां ॥ यदुच्छिष्टमभोज्यंयद्वा-

दुश्चरितंमम ॥ सर्वंपुनंतुमामापोसतांचंप्रतिग्रहु९स्वाहा ॥ ॐकेशवाय
नमः । नारायणाय नमः । माधवाय नमः० । दधिक्राव्णोअकारिष-
मित्यादि अर्घ्यदानांते प्राणायामांतं प्रातःसंध्यावत् ॥ ॐ उद्वयं-
तमसस्परिपश्यंतोज्योतिरुत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमं ॥
उदुत्यंजातवेदसंदेववंहंतिकेतवः ॥ दृशेविश्वायसूर्यम् ॥ चित्रंदेवाना
मुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्ष९
सूर्यआत्माजगतस्तस्थुषश्च ॥ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥ प
श्येमशरदःशतंजीवेमशरदःशतं नंदामशरदःशतंमोदामशरदःशतंभ
वामशरदःशत९शृणवामशरदःशतंप्रब्रवामशरदःशतमजीताःस्यामश
रदःशतंज्योक्चसूर्यंदृशे ॥ यउदगान्महतोर्णवाद्विभ्राजमानःसरिरस्य
मध्यात्समावृषभोलोहिताक्षःसूर्योविपश्चिन्मनसापुनातु ॥ अवांतरदि

शाभ्यो नमः ॥ अपक्रामंतु पिशाचादिप्राणायामं कृत्वा ॥ मध्याह्नसंध्यांगं अष्टोत्तरशतं अष्टाविंशतिर्दशसंख्यं वा गायत्रीजपमहं करिष्ये ॥ गायत्रीजपं कृत्वा ॥ सं॰स्रवंतुदिशोमयि॰ ॥ अनेन मध्याह्नसंध्यानित्यकर्मणा भगवान्परमेश्वरः प्रीयताम् ॥ विष्णवे नमो विष्णवे नमो विष्णवे नमः ॥ इति मध्याह्नसंध्या समाप्ता ॥

॥ अथ सायंसंध्याप्रारंभः ॥

ॐ केशवाय नमः इत्यादिप्राणायामं कृत्वा ॥ सायंसंध्या वृद्धा कृष्णा कृष्णवर्णा कृष्णवस्त्रा कृष्णगंधा कृष्णमाल्यानुलेपना गरुडवाहना विष्णुदेवत्या आहवनीयाग्न्युपस्थाना सामवेदसंहिता तृतीया विष्णुसंध्या सत्यवतीनाम्नी मम उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायंसंध्योपास्तिं करिष्ये ॥ आयांतुवरंदादेवी॰ सर्वदेव-

ताआपोभूर्भुवःसुवरापुॐ ॥ अग्निश्चमामन्युश्चमन्युपतयश्चमन्युकृते
भ्यः ॥ पापेभ्योरक्षंतां ॥ यदह्नापापमकार्षं ॥ मनसावाचाहस्ताभ्यां ॥
पद्भ्यामुदरेणशिश्ना ॥ अहस्तदवलुंपतु ॥ यत्किंचदुरितंमयि ॥ इदमहं
माममृतयोनौ ॥ सत्येज्योतिषिजुहोमिस्वाहा ॥ ॐ केशवाय नमः ॥
नारायणाय० ॥ द्रुपदादिवेन्मुमुचानः ॥ स्विन्नस्नात्वीमलादिव ॥ पूतंपवि
त्रेणेवाज्यं ॥ आपःशुंधंतुमैनसः ॥ ॐभूर्भुवःसुवस्तत्सवितुर्वरेण्यंभर्गो
देवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ॐश्रीवरुणाय इदमर्घ्यं
दत्तं नमम ॥ एवंत्रिरर्घ्यंदत्वा ॥ असावादित्योब्रह्मेतिब्रह्मैवसन्ब्रह्माप्ये-
तियएवंवेद ॥ ॐकेशवाय नमः इत्यादिप्राणायामं कृत्वा ॥ अपक्रामंतु०
ॐमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ सायंसंध्यांगमष्टोत्तरशत-
मष्टाविंशतिर्दशसंख्यं वा गायत्रीजपमहं करिष्ये ॥ गायत्रीजपं कृत्वा ॥

ॐइमंमेवरुणश्रुधीहवमद्याचमृडय॥त्वामवस्युराचके॥ॐतत्त्वायामि
ब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः॥ अहेडमानोवरुणेहबोध्यु
रुशꣳसमानआयुःप्रमोषीः॥ॐत्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोवया
सिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्म
त् ॥ सत्वन्नोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोव
रुणꣳरराणोवीहिमृडीकꣳसुहवोनएधि॥ ॐयच्चिद्धितेविशोयथाप्रदेव-
वरुणव्रतं॥ मिनीमसिद्यविद्यवि॥सायंप्रातर्नमस्यंतिसामासंध्यांअभिर
क्षत्वोंनमः॥ नमःप्रतीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चन
मोनमउदीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमःप्रा
च्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोदक्षिणायैदिशे
याश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमः ऊर्ध्वायैदिशेयाश्चदेव-

तो० ॥आयुःपृथिव्यांद्रविणंब्रह्मवर्चसंमह्यंदत्वाप्रजातुंब्रह्मलोकं ॥ श्रियै नमः॥ संध्यायै नमः॥ विद्यायै नमः॥ अनेन सायंसंध्याख्येनकर्मणा भगवान्परमेश्वरः प्रीयताम्॥ विष्णवे नमो विष्णवे नमो विष्णवे नमः ॥

॥ अथ तृचाकल्पनमस्कारप्रारंभः ॥

श्रीगणेशाय नमः ॥ आचम्य प्राणायामं कृत्वा अद्येत्यादि० श्रीसवितृसूर्यनारायणप्रीत्यर्थं तृचाकल्पेन विधिना नमस्काराख्यं कर्म करिष्ये ॥ अथ ध्यानम् ॥ ध्येयः सदा सवितृमंडलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः ॥ केयूरवान्मकरकुंडलवान् किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः ॥ ॐ ह्रां उद्यन्नद्यमित्रमहः ह्रां ॐ मित्राय नमः ॥ १ ॥ ॐ ह्रीं आरोहन्नुत्तरां दिवं ह्रीं ॐ रवये नमः ॥ २ ॥ ॐ ह्रूं हृद्रोगंममसूर्य ह्रूं ॐ सूर्याय० ॥ ३ ॥ ॐ ह्रैं हरिमाणंचनाशय ह्रैं

ॐ भानवे० ॥ ४ ॥ ॐ ह्रौं शुकेंपुमेहरिमाणं ह्रौं ॐ खगाय० ॥ ५ ॥
ॐ ह्रः रोपणाकासुदध्मसि ह्रः ॐ पूष्णे न० ॥६॥ ॐ ह्रां अथोहा
रिद्रवेपुमे ह्रां ॐ हिरण्यगर्भाय० ॥ ७ ॥ ॐ ह्रीं हरिमाणंनिदध्मसि
ह्रीं ॐ मरीचये० ॥ ८ ॥ ॐ ह्रूं उदगादयमादित्यः ह्रूं ॐ आदि-
त्याय० ॥ ९ ॥ ॐ ह्रैं विश्वेनसहसा सह ह्रैं ॐ सवित्रे न० ॥ १० ॥
ॐ ह्रौं द्विषंतंममरंधयन् ह्रौं ॐ अर्काय० ॥ ११ ॥ ॐ ह्रः मोअहं
द्विषतोरधं ह्रः ॐ भास्कराय० ॥ १२ ॥ ॐ ह्रांह्रीं उद्यन्नद्यमित्रमह
आरोहन्नुत्तरांदिवं ॐ ह्रां ह्रीं मित्ररविभ्यां नमः ॥ ॐ ह्रूंह्रैं हृद्रोगं
ममसूर्यहरिमाणंचनाशय ह्रूं ह्रैं ॐ सूर्यभानुभ्यां० ॥ ॐ ह्रौंह्रः
शुकेंपुमेहरिमाणंरोपणाकासुदध्मसि ह्रौंह्रः ॐ खगपूषभ्यां० ॥ ॐ
ह्रांह्रीं अथोहारिद्रवेपुमेहरिमाणंनिदध्मसि ॥ ह्रांह्रीं ॐ हिरण्यग-

र्भमरीचिभ्यां० ॥ ॐ ह्रूं ह्रैं उदगादयमादित्यो विश्वेन सहसा सह ह्रूं ह्रैं
ॐ आदित्यसवितृभ्यां न० ॥ ॐ ह्रौं ह्रः द्विषंतं मम रंधयन्मो अहं द्विष
तो रंधं ह्रौं ह्रः ॐ अर्कभास्कराभ्यां० ॥ ॐ ह्रां ह्रीं ह्रूं ह्रैं उद्य
न्नद्य० दिवं० ॥ हृद्रो० नाशय ॥ ह्रां ह्रीं ह्रूं ह्रैं ॐ मित्ररविसूर्य
भानुभ्यो० ॥ ॐ ह्रौं ह्रः ह्रां ह्रीं शुके० सुदध्मसि ॥ अथो हा० निद
ध्मसि ॥ ह्रौं ह्रः ह्रां ह्रीं ॐ खगपूषहिरण्यगर्भमरीचि० ॥ ॐ ह्रूं ह्रैं
ह्रौं ह्रः उदगा० सह ॥ द्विषंतं० रंधं ॥ ह्रूं ह्रैं ह्रौं ह्रः ॐ आदित्यसवित्रर्क
भास्करेभ्यो न० ॥ ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः उद्यन्न०
द्विषंतं मम रंधयन्मो अहं द्विषतो रंधं ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्रां ह्रीं ह्रूं
ह्रैं ह्रौं ह्रः ॐ मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्र
र्कभास्करेभ्यो नमो नमः ॥ इति त्रिः ॥ तृचाकल्पनमस्काराः समाप्ताः ॥

## अथ देवपूजाप्रारंभः ॥

श्रीगणेशाय नमः ॥ ॐकेशवादिप्राणायामं कृत्वा ॥ श्रीमन्महागणाधिपतये नमः ॥ इष्टदेवताभ्यो नमः ॥ कुलदेवताभ्यो नमः ॥ ग्रामदेवताभ्योनमः ॥ वास्तुदेवताभ्यो नमः ॥ शचीपुरंदराभ्यां नमः ॥ उमामहेश्वराभ्यां नमः ॥ मातापितृभ्यां नमः ॥ सर्वेभ्यो देवेभ्यो नमः ॥ सर्वेभ्यो ब्राह्मणेभ्यो नमो नमः ॥ अविघ्नमस्तु ॥ सुमुखश्चैकदंतश्च कपिलो गजकर्णकः ॥ लंबोदरश्च विकटो विघ्ननाशो गणाधिपः ॥ धूम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ॥ संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशांतये ॥ सर्वमंगलमांगल्ये शिवे सर्वा-

थेसाधिके ॥ शरण्ये त्र्यंबके गौरि नारायणि नमोस्तु ते ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममंगलम् ॥ येषां हृदिस्थो भगवान्मंगलायतनं हरिः ॥ तदेव लग्नं सुदिनं तदेव ताराबलं चंद्रबलं तदेव ॥ विद्याबलं दैवबलं तदेव लक्ष्मीपते तेंऽघ्रियुगं स्मरामि ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषामिंदीवरश्यामो हृदयस्थो जनार्दनः ॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ॥ सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ॥ सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ सर्वेष्वारंभकार्येषु त्रयस्त्रिभुवनेश्वराः ॥ देवा दिशंतु नः सिद्धिं ब्रह्मेशानजनार्दनः ॥ श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य ब्रह्मणो द्वितीये परार्धे विष्णुपदे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वंतरे भरतवर्षे भरतखंडे क-

लियुगे कलिप्रथमचरणे जंबुद्वीपे दंडकारण्ये देशे गोदावर्याः दक्षिणे तीरे कृष्णावेण्योरुत्तरे तीरे शालिवाहनशके बौद्धावतारे रामक्षेत्रे रामरामाश्रमे अस्मिन्वर्तमाने अमुकनामसंवत्सरे अमुकायने अमुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अद्य वासरः वासरस्तु अमुकवासरे ॥ अद्य दिवसनक्षत्रं विष्णुदिवसनक्षत्रे ॥ विष्णुस्थे वर्तमाने चंद्रे ॥ विष्णुस्थे श्रीसूर्यें ॥ विष्णुस्थे देवगुरौ ॥ शेषेपु ग्रहेपु यथायर्थं राशिस्थानस्थितेपु सत्सु एवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रीमहाविष्णुप्रमुखपंचायतनदेवताप्रीत्यर्थं यथामीलितोपचारद्रव्यैः पूजनमहं करिष्ये ॥ तदंगं कलशपूजनं शंखपूजनं घंटापूजनं पुरुषसूक्तषडंगन्यासं च करिष्ये ॥ पृथ्वीति मंत्रस्य मेरुपृष्ठऋषिः कूर्मो देवता सुतलं छंदः

आसने विनियोगः ॥ ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभोजने ॥ तिष्ठ देवि शिखाबंधे चामुंडे ह्यपराजिते ॥ अपक्रामंतु भूतानि पिशाचाः सर्वतोदिशम् ॥ सर्वेषामविरोधेन पूजाकर्म समारभे ॥ तीक्ष्णदंष्ट्र महाकाय कल्पांतदहनोपम ॥ भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ ॐयत्पुरुषंव्यदधुः ॥ कतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहू ॥ काबूरूपादाउच्येते ॥ ॐहृदयाय नमः ॥ ब्राह्मणोस्यमुखमासीत् ॥ बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यः ॥ पद्भ्यांशूद्रोअजायत ॥ ॐशिरसे स्वाहा ॥ चंद्रमामनसोजातः ॥ चक्षोःसूर्योअजायत ॥ मुखादिंद्रश्चाग्निश्च ॥ प्राणाद्वायुरजायत ॥ ॐशिखायै वषट् ॥ नाभ्यां आसीदंतरिक्षं ॥ शीर्ष्णोद्यौःसमवर्तत ॥

पद्भ्यांभूमिर्दिशःश्रोत्रात्‌।तथालोकाँ२अंकल्पयन्‌॥ ॐकवचायहुं॥ सप्तास्यासन्परिधयः॥ त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाः॥ अबध्नन्पुरुषंपशुं॥ ॐनेत्रत्रयाय वौषट्‌॥ यज्ञेनयज्ञमयजंतदेवाः॥ तानिधर्माणिप्रथमान्यासन्‌ ॥ तेहनाकंमहिमानःसचंते ॥ यत्रपूर्वेसाध्याःसंतिदेवाः॥ ॐअस्त्राय फट्‌॥ कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः॥ मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुंधरा॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः॥ अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः॥ अत्र गायत्री सावित्री शांतिपुष्टिकरी तथा॥ आयांतु देवपूजार्थं दुरितक्षयकारकाः॥ गंगे च यमुने चैव गोदावरि सरस्वति॥ नर्मदे सिंधु कावेरि जलेऽस्मिन्संनिधिं कुरु॥ ॐभूर्भुवःसुवःकलशाय नमः॥ सकलपूजार्थे

गंधाक्षतपुष्पं समर्पयामि ॥ कलशमुद्रां प्रदर्श्य ॥ शंखादौ चंद्रदैवत्यं कुक्षौ वरुणदेवता ॥ पृष्ठे प्रजापतिश्चैव अग्रे गंगा सरस्वती ॥ त्रैलोक्येयानि तीर्थानि वासुदेवस्य चाज्ञया ॥ शंखेतिष्ठंतिविप्रेंद्र तस्माच्छंखं प्रपूजयेत् ॥ त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ॥ अग्रतः सर्वदेवानां पांचजन्य नमोऽस्तु ते ॥ पांचजन्याय विद्महे पावमानाय धीमहि ॥ तन्नः शंखः प्रचोदयात् ॥ शंखदेवताभ्यो नमः ॥ समस्तोपचारार्थे गंधपुष्पं समर्पयामि ॥ शंखमुद्रां प्रदर्श्य ॥ आगमार्थं तु देवानां गमनार्थं तु रक्षसां ॥ कुर्वे घंटारवं तत्र देवताह्वानलांछनं ॥ घंटायै नमः सकलपूजार्थे गंधाक्षतपुष्पं समर्पयामि ॥ घंटामुद्रां प्रदर्श्य ॥ घंटानादं कुर्यात् ॥ भोदीपभूताधारस्त्वं ज्योतिषां पतिरव्ययः ॥ यावत्पूजासमाप्तिः स्यात्तावत्त्वं सुस्थिरोभव ॥ दीपदेवतायैनमः स० गंधा०

अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा ॥ यः स्मरेत्पुंडरीकाक्षं स बाह्याभ्यंतरः शुचिः ॥ शंखोदकेन पूजाद्रव्याणि संप्रोक्ष्य आत्मानं च प्रोक्षेत् ॥ अथ ध्यानम् ॥ शांताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाधारं गगनसदृशं मेघवर्णं शुभांगम् ॥ लक्ष्मीकांतं कमलनयनं योगिभिर्ध्यानगम्यं वंदे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ १ ॥ ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचंद्रावतंसं रत्नाकल्पोज्ज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नम् ॥ पद्मासीनं समंतात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववंद्यं निखिलभयहरं पंचवक्त्रं त्रिनेत्रम् ॥२॥ वक्रतुंड महाकाय सूर्यकोटिसमप्रभ॥ निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ ३ ॥ ध्येयः सदा सवितृमंडलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः ॥ केयूरवान्मकरकुंडलवान् किरीटी हारी हिर-

ण्मयवपुर्धृतशंखचक्रः ॥४॥ नमो देव्यै महादेव्यै शिवायै सततं नमः॥ नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम्॥५॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्यो नमो नमः॥ध्यायामि॥ ॐसहस्रशीर्षापुरुषः॥ सहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वा ॥ अत्यतिष्ठद्दशांगुलं ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्यो नमः॥आवाहनार्थे पुष्पांजलिं समर्पयामि॥ ॐपुरुषएवेदꣳसर्वं ॥ यद्भूतंयच्चभव्यं॥ उतामृतत्वस्येशानः॥ यदन्नेनातिरोहति ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्यो नमः॥ आसनार्थे अक्षतान् समर्पयामि ॥ ॐएतावानस्यमहिमा ॥ अतोज्यायांꣳश्चपूरुषः॥ पादोस्यविश्वाभूतानि॥त्रिपादस्यामृतंदिवि ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमः॥पाद्यंसमर्पयामि ॥ ॐत्रिपादूर्ध्वउदैत्पुरुषः॥ पादोस्येहाभवात्पुनः॥ततोविष्वङ्व्यक्रामत् ॥ साश

नान्नशनेअभि ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्यो नमः ॥ अर्घ्यं समर्पयामि ॥ तस्माद्विराडजायत ॥ विराजोअधिपूरुषः ॥ सजातोअत्य रिच्यत ॥ पश्चाद्भूमिमथोपुरः ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवता भ्योनमः ॥ आचमनीयं समर्पयामि ॥ ॐ यत्पुरुषेणहविषा ॥ देवायज्ञ मतन्वत ॥ वसंतोअस्यासीदाज्यं ॥ ग्रीष्मइध्मःशरद्धविः ॥ श्रीमहावि-ष्णुप्रमुखपंचायतनदेवताभ्यो नमः ॥ स्नानं समर्पयामि ॥ स्नानांतरेण आचमनीयं समर्पयामि ॥ॐसप्तास्यासन्परिधयः ॥ त्रिःसप्तसमिधःकृ-ताः ॥ देवायद्यज्ञंतन्वानाः ॥ अबध्नन्पुरुषंपशुं ॥ मधुपर्कं निवेदयामि दधि घृतं मधु मधुपर्कस्नानान्तरेण आचमनीयं समर्पयामि॥अथ पंचा मृतस्नानम् ॥ ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्णियं ॥ भवावाज स्यसंगथे ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्यो नमः ॥ पयःस्नानं

समर्पयामि॥पयःस्नानांतरेण शुद्धोदकस्नानं समर्पयामि॥शुद्धोदकस्ना-
नांतरेण आचमनीयं समर्पयामि ॥ सकलपूजार्थे गंधाक्षतपुष्पं सम-
र्प० ॥ ॐ दधिक्राव्णोंअकारिषंजिष्णोरश्वंस्यवाजिनः ॥ सुरभिनोमुखा
करत्प्रण आयूंꣳषितारिषत्॥श्रीमहाविष्णु० दधिस्नानं समर्प०॥दधि-
स्नानांतरेण शुद्धोदक० सम०॥शुद्धोदक० आच० सकलपूजार्थे०॥
ॐ घृतंमिमिक्षिरेघृतमंस्ययोनिर्घृतेश्रितोघृतमुंवस्यधाम ॥ अनुष्वध
मावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यं ॥ श्रीमहावि० ॥ घृतस्नानं स-
मर्प० ॥ घृतस्नानांतरेण शुद्धोदकस्नानं सम० ॥ शुद्धोदक०सकलपू०॥
ॐमधुवाताऋतायतेमधुक्षरंतिसिंधवः॥माध्वीर्नःसंत्वोषधीः॥मधुनक्त
मुतोषसोमधुमत्पार्थिवꣳरजः॥मधुद्यौरस्तुनःपिता॥ मधुमान्नोवनस्प
तिर्मधुमाꣳअस्तुसूर्यः॥माध्वीर्गावोभवंतुनः॥श्रीमहावि०॥मधुस्नानं०

॥ मधुस्नानांतरेण शुद्धोदक० ॥ सकल० ॥ ॐ त्वेक्रतुमपिवृंजंतिविश्वे द्विर्यदेतेत्रिर्भवंत्यूमाः ॥ स्वादोःस्वादीयःस्वादुनांसृजासमतंऊपुमधुमधुनाभियोधि ॥ श्रीमहावि० ॥ शर्करास्नानं स० ॥ शर्करास्नानांते० ॥ शुद्धोदक० ॥ सकलपूजा० ॥ ॐ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ श्रीमहा० ॥ षष्ठेन गंधोदकस्नानं सम० ॥ गंधोदकस्नानांतरेण शुद्धोदकस्ना० ॥ सकलपू० ॥ श्रीमहावि० ॥ विलेपनार्थे चंदनं सम० ॥ अलंकरणार्थे अक्षतान् सम० ॥ पूजार्थे पुष्पाणि तुलसीपत्राणि बिल्वपत्राणि दूर्वांकुरांश्च ऋतूद्भवानि पुष्पाणि समर्प० ॥ श्रीमहा० ॥ धूपं स० ॥ श्रीमहा० ॥ दीपं स० ॥ श्रीमहा० ॥ नैवेद्यार्थे पंचामृतशेषनैवेद्यं स० ॥ (अथवा पयःशर्करां गुडं) ॥ ॐ प्राणाय स्वाहा ॥ ॐ अपानाय स्वाहा ॥ ॐ व्या-

नाय स्वाहा ॥ ॐ उदानाय स्वाहा ॥ ॐ समानाय स्वाहा ॥ ॐ ब्रह्मणे स्वाहा ॥ नैवेद्यमध्ये पानीयं समर्प० (पुनः) ॐ प्राणाय स्वाहा० ब्रह्मणे स्वाहा ॥ हस्तप्रक्षालनं सम० मुखप्रक्षालनं स० ॥ करोद्वर्तनार्थे चंदनं स० ॥ मुखवासार्थे पूगीफलतांबूलंस०॥सुवर्णपुष्पदक्षिणां समर्पयामि ॥ श्रीमहा० ॥ प्रदक्षिणां सम० ॥ नमस्कारं सम० ॥ मंत्रपुष्पं समर्पयामि ॥ अनेन यथाज्ञानेन कृतपूर्वाराधनेन श्रीमहाविष्णुः प्रीयतां न मम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ उत्तरे निर्माल्यं विसर्जयेत् ॥ अथाभिषेकः ॥ ॐसहस्रशीर्षापुरुषः ॥ सहस्राक्षःसहस्रपात् ॥ सभूमिं विश्वतोवृत्वा ॥ अत्यतिष्ठद्दशांगुलं ॥ पुरुषएवेदꣳसर्वं ॥ यद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानः ॥ यदन्नेनातिरोहति ॥ एतावानस्यमहिमा ॥ अतोज्यायाꣳश्चपूरुषः ॥ पादोस्यविश्वाभूतानि ॥ त्रिपादस्यामृतंदिवि ॥

त्रिपादूर्ध्वउदैत्पुरुषः ॥ पादोस्येहाभवात्पुनः ॥ ततोविष्वङ्व्यक्रामत् ॥
साशनानशनेअभि ॥ तस्माद्विराडजायत ॥ विराजोअधिपूरुषः ॥ सजा-
तो अत्यरिच्यत ॥ पश्चाद्भूमिमथोपुरः ॥ यत्पुरुषेणहविषा ॥ देवायज्ञम-
तन्वत ॥ वसंतोअस्यासीदाज्यं ॥ ग्रीष्मइध्मःशरद्धविः ॥ सप्तास्यासन्प-
रिधयः ॥ त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाः ॥ अवध्नन्पुरुषंप-
शुं ॥ तंयज्ञंबर्हिषिप्रौक्षन् ॥ पुरुषंजातमग्रतः ॥ तेनदेवाअयजंत ॥ सा-
ध्याऋषयश्चये ॥ तस्माद्यज्ञात्सर्वहुतः ॥ संभृतंपृषदाज्यं ॥ पशूँस्ताँश्च
क्रेवायव्यान् ॥ आरण्यान्ग्राम्याश्चये ॥ तस्माद्यज्ञात्सर्वहुतः ॥ ऋचःसा-
मानिजज्ञिरे ॥ छंदांसिजज्ञिरेतस्मात् ॥ यजुस्तस्मादजायत ॥ तस्माद-
श्वाअजायंत ॥ येकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात् ॥ तस्माज्जाताअ-
जावयः ॥ यत्पुरुषंव्यदधुः ॥ कतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहू ॥

कावूरूपादावुच्येते ॥ ब्राह्मणोस्यमुखमासीत् ॥ बाहूराजन्यःकृतः ॥ ऊरू तदस्ययद्वैश्यः ॥ पद्भ्याऽशूद्रोअजायत ॥ चंद्रमामनसोजातः ॥ चक्षोः सूर्योअजायत ॥ मुखादिंद्रश्चाग्निश्च ॥ प्राणाद्वायुरजायत ॥ नाभ्याआसीदंतरिक्षं ॥ शीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात् ॥ तथालोकाऽअकल्पयन् ॥ वेदाहमेतंपुरुषंमहांतं ॥ आदित्यवर्णंतमसस्तुपारे ॥ सर्वाणिरूपाणिविचित्यधीरः ॥ नामानिकृत्वाभिवदन्यदास्ते ॥ धातापुरस्ताद्यमुदाजहार ॥ शक्रःप्रविद्वान्प्रदिशश्चतस्रः ॥ तमेवंविद्वानमृतइहभवति ॥ नान्यःपंथाअयनायविद्यते ॥ यज्ञेनयज्ञमयजंतदेवाः ॥ तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंते ॥ यत्रपूर्वे साध्याःसंतिदेवाः ॥ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे ॥ पृथिव्याः सप्तधामभिः ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपाऽसुरे ॥

त्रीणिंपुदाविचंक्रमेविष्णुंर्गोपाअदाभ्यः ॥ अतोधर्माणिधारयंन् ॥
विष्णोःकर्माणिपश्यतयतोव्रतानिपस्पुशे ॥ इंद्रस्ययुज्यःसखा ॥ तद्वि-
ष्णोःपरमंपदंसदापश्यंतिसूरयः ॥ दिवीवचक्षुराततं ॥ तद्विप्रासोविप-
न्यवोजागृवांसःसमिंधते ॥ विष्णोर्यत्परमंपदं ॥ देवस्यत्वासवितुःप्र-
सवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रियेणा-
भिषिंचामि ॥ बलायश्रियेयशसेन्नाद्याय ॥ भूर्भुवःसुवः अमृताभिषेको-
स्तु ॥ शांतिः पुष्टिस्तुष्टिश्चास्तु ॥ हरों हरों हरों हरहरमहादेव ॥
श्रीमहावि० ॥ अभिषेकस्नानंसमर्पयामि ॥ अभिषेकस्नानांतेआच-
मनीयंसम० ॥ नयैप्रजांमेगोपाय ॥ अमृतत्वायजीवसे ॥ जातांज-
निष्यमाणांच ॥ अमृतेसत्येप्रतिष्ठिताम् ॥ सुप्रतिष्ठितमस्तु ॥ ॐतंयज्ञं
बर्हिषिप्रौक्षन् ॥ पुरुषंजातमग्रतः ॥ तेनदेवाअयजन्त ॥ साध्याऋषयश्च

ये ॥ श्रीमहा० ॥ वस्त्रार्थें तुलसीपत्रंसम० ॥ ॐतस्माद्यज्ञात्सर्वहुतः ॥ संभृतं० ॥ उपवस्त्रार्थें यज्ञोपवीतं सम० ॥ ( अथवा तुलसीपत्रं स० ) वस्त्रोपवस्त्रांते आचमनीयं सम०॥ॐतस्माद्यज्ञात्सर्वहुतः ॥ ऋचः सा० श्रीखंडं चंदनं दिव्यं गंधाढ्यं सुमनोहरम् ॥ विलेपनं सुरश्रेष्ठ चंदनं प्रतिगृह्यताम्॥गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं॥ईश्वरींᳪसर्वं० ॥ श्रीमहा० विलेपनार्थें चंदनं सम० ॥ अक्षताश्च सुरश्रेष्ठ कुंकुमाक्ताः सुशोभिताः ॥ मया निवेदिता भक्त्या गृहाण परमेश्वर ॥ श्रीमहा० ॥ अलंकरणार्थें अक्षतान् सम० ॥ हरिद्रां कुंकुमं परिमलद्रव्यं सम० ॥ तस्मादश्वा० ॥ माल्यादीनि सुगंधीनि मालत्यादीनि वै प्रभो ॥ मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् ॥ करवीरैर्जातिकुसुमैश्चंपकैर्बकुलैः शुभैः ॥ शतपत्रैश्च कल्हारैरर्चये परमेश्वरं ॥ श्रीमहा० ॥

पूजार्थे कालोद्भवपुष्पाणि समर्पयामि ॥ श्रीमहा० ॥ केशवादिचतु-
र्विंशतिनामभिः तुलसीपत्राणि सम० ॥ त्रिदलं त्रिगुणाकारं त्रिनेत्रं च
त्रयायुधं ॥ त्रिजन्मपापसंहारमेकबिल्वं शिवार्पणम् ॥ ॐयत्पुरुषं
व्यदधुः ॥ कति० ॥ धूरसिधूर्वधूर्वंतंधूर्वंतं योऽस्मान् धूर्वतितं धूर्वयं वयं
धूर्वामः ॥ वनस्पतिरसोद्भूतो गंधाढ्यो गंध उत्तमः ॥ आघ्रेयः सर्व-
देवानां धूपोऽयं प्रतिगृह्यताम्॥श्रीम० धूपं स०॥ॐब्राह्मणोस्यमुख०॥
आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ॥ दीपं गृहाण देवेश त्रैलो-
क्यतिमिरापह ॥ भक्त्या दीपं प्रयच्छामि देवाय परमात्मने ॥ त्राहि
मां निरयाद्घोराद्दीपोऽयं प्रतिगृह्यताम् ॥ उद्दीप्यस्वजातवेदोपघ्नंनि-
र्ऋतिंमम ॥ पशूंश्चमह्यमावहजीवनंचदिशोदिश ॥ श्रीम० ॥ दीपं
स० ॥ ॐचंद्रमामनसोजातः ॥ चक्षोःसू० ॥ नैवेद्यं गृह्यतां देव भक्ति

मे ह्यचलां कुरु ॥ ईप्सितं मे वरं देहि परत्र च परां गतिम् ॥ शर्करखंडखाद्यानि दधिक्षीरघृतानि च ॥ आहारं भक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम् ॥ श्रीमहा० ॥ नैवेद्यार्थे पयःशर्करानैवेद्यं सम० ॥ नैवेद्यात्पूर्वं आचमनीयं स० ॥ अमृतोपस्तरणमसि ॥ ॐ प्राणायस्वाहा ॥ ॐ अपानायस्वाहा ॥ ॐ व्यानायस्वाहा ॥ ॐ उदानायस्वाहा ॥ ॐ समानायस्वाहा ॥ ॐ ब्रह्मणेस्वाहा ॥ नैवेद्यमध्ये पानीयं स० ॥ ॐ प्राणायस्वाहा ॥ ॐ अपा० ब्रह्मणेस्वाहा ॥ उत्तरापोशनं सम० ॥ हस्तप्रक्षालनं स० ॥ मुखप्रक्षालनं स० ॥ करोद्वर्तनार्थे चंदनं स० ॥ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ॥ कर्पूरैलासमायुक्तं तांबूलं प्रतिगृह्यताम् ॥ ॐ नाभ्या आसी० ॥ श्रीम० तांबूलं स० ॥ वेदाहमेतंपुरुषं महांतं ॥ आदित्यवर्णंतमसस्तुपारे ॥ सर्वाणिरूपाणिविचित्यधीरः ॥

नामानिकृत्वाभिवदन्यदास्ते॥हिरण्यगर्भगर्भस्थं हेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतः शांतिं प्रयच्छ मे ॥ श्रीम० सुवर्णपुष्पदक्षिणांस० ॥ धातापुरस्ताद्यमुदाजहार ॥ शक्रःप्रविद्वान्० ॥ इदं फलं मया देव स्थापितं पुरतस्तव ॥ तेन मे सुफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ फलेन फलितं सर्वं त्रैलोक्यं सचराचरं ॥ तस्मात्फलप्रदानेन सफलाश्च मनोरथाः ॥ श्रीम० ॥ नारिकेलफलं स० ( अथवा ) कालोद्भवफलं स० ॥ श्रियेजातःश्रियआनिरियायश्रियंवयो जरितृभ्योदधाति ॥ श्रियंवसानाअमृतत्वमायन्भवंतिसत्यासमिथामितद्रौ ॥ श्रियएवैनंतच्छ्रियामादधातिसंततमृचावषट्कृत्यंसंतत्यैसंधीयतेप्रजयापशुभिर्यएवंवेद ॥ कर्पूरगौरं करुणावतारं संसारसारं भुजगेंद्रहारम् ॥ सदा वसंतं हृदयारविंदे भवं भवानीसहितं नमामि ॥

( आरार्तिक्यं कुर्यात् ) ॥ अन्यथा शरणं नास्ति त्वमेव शरणं मम ॥ तस्मात्कारुण्यभावेन रक्षस्व परमेश्वर ॥ श्रीम० ॥ नमस्कारान् सम०॥ यानि कानि च पापानि जन्मांतरकृतानि च ॥ तानि तानि विनश्यंति प्रदक्षिणपदे पदे ॥ श्रीम० ॥ प्रदक्षिणाः सम० ॥ यज्ञेनंयज्ञमयजंत० ॥ ॐ राजाधिराजायंप्रसह्यसाहिनें ॥ नमोंवयंवैश्रवणायंकुर्महे ॥ समेकामान्कामकामायमह्यं ॥ कामेश्वरोवैश्रवणोददातु ॥ कुबेरायंवैश्रवणायं ॥ महाराजायनमः ॥ ॐस्वस्ति ॥ साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यमयं समंतपर्यायी स्यात् सार्वभौमः सार्वायुष आंतादापरार्धात् पृथिव्यै समुद्रपर्यंताया एकराळिति ॥ तदप्येष श्लोकोभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे ॥ आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥ योवैतांब्र-

ह्मणोवेद ॥ अमृतेनावृतांपुरीं ॥ तस्मैब्रह्मचंब्रह्माच ॥ आयुःकीर्तिं प्रजांददुः ॥ श्रीम० ॥ मंत्रपुष्पं स० ॥ नमस्करोमि ॥ गतं दुःखं गतं पापं गतं दारिद्र्यमेव च ॥ आगता सुखसंपत्तिः पुण्योहं तव दर्शनात् ॥ आवाहनं न जानामि न जानामि तवार्चनम् ॥ पूजां चैव न जानामि क्षम्यतां परमेश्वर ॥ मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ॥ यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ नमो देवेभ्यः अनेन ध्यानावाहनादिषोडशोपचारैर्यथाज्ञानेन पूर्वाराधनेनोत्तराराधनेन च श्रीभगवान् परमेश्वरः प्रीयतां न मम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ कलशशंखघंटाधूपदीपस्थावरदीपदेवताभ्यो नमः ॥ विलेपनार्थे चंदनं स० ॥ अलंकरणार्थे अक्षतान् सम० ॥ पूजार्थे पुष्पाणि स० ॥ धूपं स० ॥ दीपं स० ॥ कलशादिसमस्तदेवता० ॥ नैवेद्यार्थे प-

यःशर्करानैवेद्यं स० ॥ अमृतोपस्तरणमसि ॥ ॐप्राणायस्वाहा ॥ ॐअ-
पाना० ॥ ॐव्याना० ॥ ॐउदाना० ॥ ॐ समाना० ॥ ॐ ब्रह्मणेस्वा-
हा ॥ नैवेद्यमध्ये पानीयं स० ॥ ॐ प्राणायस्वाहा० ब्रह्मणेस्वाहा ॥
कलशादिसमस्त० ॥ मंत्रपुष्पं स० ॥ शंखमध्ये स्थितं तोयं भ्रामितं
केशवोपरि ॥ अंगलग्नं मनुष्याणां ब्रह्महत्यां व्यपोहति ॥ १ ॥ अ-
कालमृत्युहरणं सर्वव्याधिविनाशनम् ॥ विष्णुपादोदकं तीर्थं जठरे
धारयाम्यहम् ॥ २ ॥ बाणरावणचंडीशनंदीभृंगीरिटादयः ॥ सदा-
शिवप्रसादेन सर्वे गृह्णंतु शांभवाः ॥ ३ ॥ अपराधसहस्राणि क्रि-
यंतेऽहर्निशं मया ॥ दासोऽयमिति मां मत्वा क्षमस्व परमेश्वर ॥ इति
प्रार्थनां समर्पयामि ॥ अनेन यथाज्ञानेन कृतपूजनेन श्रीभगवान्
परमेश्वरः प्रीयतां ॥ ॐ तत्सत् ॥ ॥ ॥

## अथ ब्रह्मयज्ञतर्पणप्रारंभः ॥

श्रीगणेशाय नमः ॥ अद्य पूर्वोच्चरितवर्तमानएवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थम् श्रीपरमेश्वरप्रीत्यर्थं ब्रह्मयज्ञेन यक्ष्ये ॥ हस्तांवनिज्य ॥ त्रिराचामेत् ॥ द्विःपरिमृज्य ॥ सकृदुपस्पृश्य ॥ सव्यंपाणिपादौप्रोक्षति ॥ शिरश्चक्षुषीनासिकेश्रोत्रेहृदयमालभ्य ॥ दक्षिणोत्तरौपाणीपादौकृत्वा ॥ सपवित्रावोमितिप्रतिपद्यते ॥ ॐ भूस्तत्सवितुर्वरेण्यं ॥ भुवो भर्गोदेवस्यधीमहि ॥ सुवर्धियोयोनःप्रचोदयात् ॥१॥ ॐ भूर्भुवस्तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ सुवर्धियोयोनःप्रचोदयात् ॥२॥ ॐ भूर्भुवःसुवस्तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात् ॥३॥ ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमं ॥ १ ॥

इषेत्वोर्जेत्वावायवस्थोपायवस्थदेवोवः सविताप्रार्पयतुश्रेष्ठतमायकर्म-
णआप्यायध्वमघ्नियादेवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा-
अयक्ष्मामावस्तेनईशतमाघशꣳसोरुद्रस्यहेतिःपरिवोवृणक्तुध्रुवाअ-
स्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ २ ॥ ॐ अग्नआया-
हिवीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ ३ ॥ ॐ शं-
नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ ४ ॥ ॐ न-
मोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः ॥ नमोवाचेनमो-
वाचस्पतयेनमोविष्णवेबृहतेकरोमि ॥ इतित्रिवारंजप्त्वा ॥ ३ ॥
शांतिःशांतिःशांतिः ॥ अनेन ब्रह्मयज्ञाख्येन कर्मणा श्रीभगवान्
परमेश्वरः प्रीयतां न मम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ ॥ श्रीपरमेश्वर-
प्रीत्यर्थं देवर्षिपितृतर्पणं करिष्ये ॥ ॐ ब्रह्माणं तर्पयामि ॥ प्रजापतिं

तर्पयामि ॥ बृहस्पतिं त० ॥ अग्निं त० ॥ वायुं त० ॥ सूर्यं त० ॥ चंद्रमसं० ॥ नक्षत्राणि० ॥ इंद्रꣳराजानं० ॥ यमꣳराजानं० ॥ वरुणꣳराजानं० ॥ सोमꣳराजानं० ॥ वैश्रवणꣳराजानं० ॥ वसूंस्त० ॥ रुद्रांस्त० ॥ आदित्यांस्त० ॥ विश्वान्देवांस्त० ॥ साध्यांस्त० ॥ ऋभूंस्त० ॥ भृगूंस्त० ॥ मरुतस्त० ॥ अथर्वणस्त० ॥ अंगिरसस्त० ॥ अथ निवीती ॥ विश्वामित्रं त० ॥ जमदग्निं त० ॥ भरद्वाजं त० ॥ गौतमं त० ॥ अत्रिं त० ॥ वसिष्ठं त० ॥ कश्यपं त० ॥ अरुंधतीं त० ॥ अगस्त्यं त० ॥ कृष्णद्वैपायनं त० ॥ जातूकर्ण्यं त० ॥ तरुक्षं त० ॥ तृणबिंदुं त० ॥ वर्मिणं० ॥ वरूथिनं० ॥ वाजिनं० ॥ वाजश्रवसं० ॥ सत्यश्रवसं० ॥ सुश्रवसं० ॥ सुतश्रवसं० ॥ सोमशुष्मायणं० ॥ सत्ववंतं० ॥ बृहदुक्थं० ॥ वामदेवं० ॥ वाजिरत्नं० ॥ हर्यज्वायनं० ॥ उदमयं० ॥

गोतमं० ॥ ऋणंजयं० ॥ ऋतंजयं० ॥ कृतंजयं० ॥ धनंजयं० ॥ बभ्रुं० ॥ त्र्यरुणं० ॥ त्रिवर्षं० ॥ त्रिधातुं० ॥ शिबिंदं० ॥ पराशरं० ॥ विष्णुं० ॥ रुद्रं० ॥ स्कंदं० ॥ काशीश्वरं० ॥ ज्वरं० ॥ धर्मं०॥ अर्थं० ॥ कामं० ॥ क्रोधं० ॥ वसिष्ठं० ॥ इंद्रं० ॥ त्वष्टारं० ॥ कर्तारं० ॥ धर्तारं० ॥ धातारं० ॥ मृत्युं० ॥ सवितारं० ॥ सावित्रीं०॥ ऋग्वेदं० ॥ यजुर्वेदं० ॥ सामवेदं० ॥ अथर्ववेदं० ॥ इतिहासपुराणंत० ॥ प्राचीनावीती ॥ वैशंपायनं० ॥ पलिंगुं० ॥ तित्तिरं० ॥ उखं० ॥ आत्रेयंपदकारं० ॥ कौंडिण्यंवृत्तिकारं० ॥ सूत्रकारं० ॥ सत्याषाढं० ॥ प्रवचनकर्तॄंस्त० ॥ आचार्यांस्त० ॥ ऋषींस्त० ॥ वानप्रस्थांस्त० ॥ ऊर्ध्वरेतसस्त० ॥ एकपत्नींस्त० ॥ १४ ॥ यथाधिकारं पितॄन् ॥ तातांवात्रितयं सपत्नजननी मातामहादित्रयं

सखि स्त्रीतनयादि तातजननीस्वभ्रातरः सस्त्रियः । तातांबात्मभगि-
न्यपत्यधवयुग्जायापिता सद्गुरुः शिष्याप्ताः पितरो महालयविधौ
तीर्थे तथा तर्पणे ॥ आब्रह्मस्तंबपर्यंतं देवर्षिपितृमानवाः ॥ तृप्यंतु
पितरः सर्वे मातृमातामहादयः ॥ अतीतकुलकोटीनां सप्तद्वीपनिवा-
सिनाम् ॥ आब्रह्मभुवनाल्लोकानिदमस्तु तिलोदकम् ॥ ये के चास्म-
त्कुले जाता अपुत्रा गोत्रिणो मृताः ॥ ते गृह्णंतु मया दत्तं सूत्रनिष्पी-
डनोदकम् ॥ अनेन देवर्षिपितृतर्पणाख्येन कर्मणा भगवान् परमेश्वरः
प्रीयतां न मम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥

अथ सबलिहरणवैश्वदेवप्रारंभः ॥

श्रीगणेशाय नमः ॥ केशवादिचतुर्विंशतिनामभिराचम्य ॥ प्राणा-
यामं कृत्वा ॥ अद्य पूर्वोच्चरिततवर्तमान एवंगुणविशेषणविशिष्टायां

शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रीप-
रमेश्वरप्रीत्यर्थं पंचसूनादोषपरिहारार्थं आत्मसंस्कारार्थं अन्नसंस्का-
रार्थं सिद्धान्नेन सायंप्रातर्वैश्वदेवौ तंत्रेण करिष्ये ॥ अग्निं प्रज्वाल्य ॥
रुक्मकनामानमग्निं प्रतिष्ठापयामि ॥ ॐ चत्वारिशृंगात्रयोअस्यपादा
द्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ२ऽ
आविवेश ॥ सप्तहस्तश्चतुःशृंगः सप्तजिह्वो द्विशीर्षकः ॥ त्रिपा-
त्प्रसन्नवदनः सुखासीनः शुचिस्मितः ॥ स्वाहां तु दक्षिणे पार्श्वे
देवीं वामे स्वधां तथा ॥ बिभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुव-
म् ॥ तोमरं व्यजनं वामैर्घृतपात्रं च धारयन् ॥ आत्माभिमुखमासीन
एवंरूपो हुताशनः ॥ अग्ने वैश्वानर शांडिल्यगोत्र मेषध्वज प्राङ्मु-
ख ममसंमुखो वरदो भव ॥ यथाहुतहंसवोगौर्येचित्प्रदिष्ठितामं-

मुंचतायजत्राः ॥ एवात्वमसत्प्रमुंचान्यꣳहुःप्रातार्यग्नेप्रतरांनआयुः ॥
परिस्तीर्य ॥ अदितेनुमन्यस्व ॥ अनुमतेनुमन्यस्व ॥ सरस्वतेनुम-
न्यस्व ॥ देवंसवितःप्रसुव: ॥ यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंम-
र्त्योजोहवीमि ॥ जातवेदोयशोअस्मासुधेहिप्रजाभिरग्नेअमृतत्वम-
श्यां ॥ यस्मैत्वꣳसुकृतेजातवेदउलोकमग्नेकृणवःस्योनं ॥ अश्विनꣳ
सपुत्रिणंवीरवंतंगोमंतꣳरयिंनशतेस्वस्ति ॥ सिद्धमन्नमग्नावधिश्रि-
त्य ॥ उदगुद्वास्य ॥ प्रोक्ष्य ॥ अग्नेःपश्चात् आत्मनोग्रतोनिधाय ॥
अभिघार्य ॥ ॐ अग्नयेस्वाहा ॥ अग्नय इदं न मम ॥ विश्वेभ्योदेवेभ्यः
स्वाहा ॥ विश्वेभ्यो देवेभ्य इदं न मम ॥ ध्रुवायभूमायस्वाहा ॥ ध्रु-
वाय भूमायेदं० ॥ ध्रुवक्षितयेस्वाहा ॥ ध्रुवक्षितय इदं० ॥ अच्युत-
क्षितयेस्वाहा ॥ अच्युतक्षितय इ० ॥ अग्नयेस्विष्टकृतेस्वाहा ॥ अग्न-

येस्विष्टकृतइदं० ॥ ॐ भूःस्वाहा ॥ अग्नय इदं० ॥ ॐ भुवःस्वाहा ॥ वायवे इदं० ॥ ॐ सुवःस्वाहा ॥ सूर्यायेदं ॥ ॐ भूर्भुवःसुवःस्वाहा ॥ प्रजापतय इदं न मम ॥ यथाहुतद्वंसवोगौर्यंचित्पदिषितामसुंचतायजत्राः ॥ एवात्वमस्मत्प्रमुंचाव्यꣳहुःप्रातार्यग्नेप्रतरांनआयुः ॥ परिस्तरणान्युत्तरे विसृज्य ॥ अदितेन्वमꣳस्थाः ॥ अनुमतेन्वमꣳस्थाः ॥ सरस्वतेन्वमꣳस्थाः ॥ देवसवितःप्रासावीः ॥ यज्ञनमस्तेयज्ञ ॥ नमोनमश्चतेयज्ञ ॥ शिवेनमेसंतिष्ठस्व ॥ स्योनेनमेसंतिष्ठस्व ॥ सुभूतेनमेसंतिष्ठस्व ॥ ब्रह्मवर्चसेनमेसंतिष्ठस्व ॥ यज्ञस्यर्धिमनुसंतिष्ठस्व ॥ उपतेयज्ञनमः ॥ उपतेनमः ॥ उपतेनमः ॥ सर्वमंत्रेषु तिष्ठति ॥ मेधावीतेजस्वीवर्चस्वीयशस्वीब्रह्मवर्चसीआयुष्मान् भूयासं ॥ स्वस्ति ॥ श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् ॥ आयुष्यं तेज आरोग्यं देहि

मे हव्यवाहन ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ स्मरणा-
देव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ ॐ धर्मायस्वाहा ॥ अध
र्मायस्वाहा ॥ परिषिच्य ॥ अद्भ्यःस्वाहा ॥ परिषिच्य ॥ ओषधिवन
स्पतिभ्यःस्वाहा ॥ रक्षोदेवजनेभ्यःस्वाहा ॥ परिषिच्य ॥ गृह्याभ्यः
स्वाहा ॥ अवसानेभ्यःस्वाहा ॥ अवसानपतिभ्यःस्वाहा ॥ सर्वभूतेभ्यः
स्वाहा ॥ परिषिच्य ॥ कामायस्वाहा ॥ परिषिच्य ॥ अंतरिक्षायस्वाहा ॥
परिषिच्य ॥ यदेजंतिजगतियच्चचेष्टतिनाम्नोभागोयन्नाम्नेस्वाहा ॥परि-
षिच्य ॥ ॐ पृथिव्यैस्वाहा ॥ अंतरिक्षायस्वाहा ॥ दिवेस्वाहा ॥ सूर्या-
यस्वाहा ॥ चंद्रमसेस्वाहा ॥ नक्षत्रेभ्यःस्वाहा ॥ इंद्रायस्वाहा ॥ बृहस्प
तयेस्वाहा ॥ प्रजापतयेस्वाहा ॥ ब्रह्मणेस्वाहा ॥ परिषिच्य ॥
स्वधापितृभ्यःस्वाहा ॥ परिषिच्य ॥ नमोरुद्रायपशुपतयेस्वाहा ॥

परिषिच्य ॥ देवेभ्यःस्वाहा ॥ अग्नौपरिषिच्य ॥ अपसव्यं ॥
पितृभ्यःस्वधास्तु ॥ परिषिच्य ॥ सव्यं ॥ भूतेभ्योनमः ॥ परिषिच्य ॥
मनुष्ययज्ञेनयक्ष्ये ॥ मनुष्येभ्योहंतं ॥ परिषिच्य ॥ प्रजाप-
तयेस्वाहा ॥ परिषिच्य ॥ परमेष्ठिनेस्वाहा ॥ परिषिच्य ॥ यथाकूपः
शतधारःसहस्रधारोअक्षितः ॥ एवामेअस्तुधान्यꣳसहस्रधारमक्षितं ॥
धनंधान्यैस्वाहा ॥ परिषिच्य ॥ अनेनसायंप्रातर्वैश्वदेवहोमाख्येन
कर्मणाभगवान्परमेश्वरःप्रीयतांनमम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ अग्नये
नमःगंधाक्षतपुष्पंसमर्पयामि ॥ येभूताःप्रचरंतिदिवानक्तंबलिमिच्छं
तोवितुदस्यप्रेष्याः ॥ तेभ्योबलिंपुष्टिकामोहरामिमयिपुष्टिंपुष्टिपतिर्द
दातुस्वाहा ॥ चांडालवायसेभ्यो भूतेभ्य इदं न मम ॥ हस्तौ पादौ
प्रक्षाल्य ॥ आचम्य ॥ प्राणायामं कुर्यात् ॥

॥ कुंड ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| | | | २५ देवेभ्यः | | | |
| ३१ यथा० | ९ सर्वभू० | १२ यदेज० | ५ रक्षोदे० | २२ ब्रह्म० | २७ भूते० | २६ पतृ० |
| ३० परमे० | ८ अवसा० | ११ अंतरि० | ४ ओषधि० | २१ प्रजा० | २४ नमो० | २३ स्वधा० |
| २९ प्रजाप० | ७ अवसा० | १० कामा० | ३ अन्न० | २० बृह० | | |
| २८ मनुष्ये | ६ गृह्या० | २ अधर्मा० | १ धर्मा० | १९ इंद्रा० | | |
| | | | | १८ नक्षत्रे० | | |
| | | | | १७ चंद्र० | | |
| | | | | १६ सूर्या० | | |
| | | | | १५ दिवे० | | |
| | | | | १४ अंतरि० | | |
| | | | | १३ पृथि० | | |

## अथ यज्ञोपवीतमंत्रः ॥

श्रीगणेशाय नमः ॥ आचम्य ॥ प्राणायामं कृत्वा ॥ अद्य पूर्वोच्चरितवर्तमानएवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थं यज्ञोपवीतसंस्कारमहं करिष्ये ॥ आपोहिष्ठामयोभु० जातवेदामोर्जयंत्या पुनातु ॥ ॐ भूरग्निंचपृथिवींचमांच ॥ त्रीꣳश्चलोकान्त्संवत्सरंच ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वध्रुवासीद ॥ भुवोवायुंचान्तरिक्षंचमांच ॥ त्रीꣳश्चलोकान्त्संवत्सरंच ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वध्रुवासीद ॥ स्वरादित्यंचदिवंचमांच ॥ त्रीꣳश्च० ॥ प्रजाप० ॥ तया० ॥ भूर्भुवःसुवश्चंद्रमसंचदिशश्चमांच ॥ त्रीꣳश्च० ॥ प्रजाप० ॥ तया० ॥ ॐकारं प्रथमतंतौ न्यसामि ॥ अग्निं द्वितीय-

तंतौ न्यसामि ॥ नागांस्तृतीयतं० ॥ सोमं चतुर्थतं० ॥ पितॄन्पंचमतं० ॥ प्रजापतिं षष्ठतं० ॥ वायुं सप्तमतं० ॥ सूर्यमष्टमतं० ॥ विश्वान्देवान् नवमतं० ॥ उद्वयंतमसस्परिपश्यंतोज्योतिरुत्तरं ॥ देवंदेवत्रासूर्यमगन्म ज्योतिरुत्तमं ॥ उदुत्यंजातवेदसंदेववहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षᳫंसूर्यआत्माजगतस्तस्थुषश्च ॥ त्रिस्ताडयेत् ॥ अद्य पूर्वोचरितवर्तमानएवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं ॥ श्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थं यज्ञोपवीतधारणमहं करिष्ये ॥ यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात् ॥ आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजः ॥ अनेनमंत्रेणधारयेत् ॥ दशगायत्रीर्जपित्वा ॥ जीर्णं विसृजेत् ॥

## ॥ अथ रुद्रः ॥

हरिःॐ ॥ इडादेवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानिशꣳसिषद्विश्वेदे
वाःसूक्तवाचः पृथिविमातर्मामाहिꣳसीर्मधुमनिष्येमधुजनिष्येमधुव
क्ष्यामिमधुवदिष्यामि मधुमतींदेवेभ्योवाचमुद्यासꣳशुश्रूषेण्यांमनुष्ये
भ्यस्तंमादेवाअवंतुशोभायैपितरोनुमदंतु ॥ ॐ शांतिःशांतिःशांतिः ॥
ॐ नमस्तेरुद्रमन्यवउतोतइषवेनमः । नमस्तेअस्तुधन्वनेबाहुभ्यामुत
तेनमः । यातइषुःशिवतमाशिवंबभूवतेधनुः । शिवाशरव्यायातवत
यानोरुद्रमृडय । यातेरुद्रशिवातनूरघोरापापकाशिनी । तयानस्तनुवा
शंतमयागिरिशंताभिचाकशीहि । यामिषुंगिरिशंतहस्तेबिभर्ष्यस्तवे ।
शिवांगिरित्रतांकुरुमाहिꣳसीःपुरुषंजगत् । शिवेनवचसात्वागिरिशा
च्छावदामसि ॥ यथानःसर्वमिज्जगदयक्ष्मꣳसुमनाअसत् । अध्यवोच

दधिवक्ताप्रथमोदैव्योभिषक् । अहींश्चसर्वाञ्जम्भयन्त्सर्वाश्चयातुधा
न्यः । असौयस्ताम्रोअरुणउतबभ्रुःसुमंगलः । येचेमा ँ रुद्राअभितोदि
क्षुश्रिताःसहस्रशोवैषा ँ हेडईमहे । असौयोवसर्पतिनीलग्रीवोविलो
हितः । उतैनंगोपाअदृशन्नदृशन्नुदहार्यः । उतैनंविश्वाभूतानिसदृष्टोमृ
डयातिनः । नमोअस्तुनीलग्रीवायसहस्राक्षायमीढुषे । अथोयेअस्यस
त्वानोहंतेभ्योकरंनमः । प्रमुंचधन्वनस्त्वमुभयोरार्त्निर्योर्ज्याम् । याश्चते
हस्तइषवःपराताभगवोवप । अवतत्यधनुस्त्व ँ सहस्राक्षशतेषुधे ॥
निशीर्यशल्यानांमुखाशिवोनःसुमनाभव । विज्यंधनुःकपर्दिनोविशल्यो
वाणवा ँ उत । अनेशन्नस्येषवआभुरस्यनिषंगधिः । यातेहेतिर्मीढुष्टम
हस्तेबभूवतेधनुः । तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुज । नमस्तेअ
स्त्वायुधायानाततायधृष्णवे । उभाभ्यामुततेनमोबाहुभ्यांतवधन्वने ।

परितेधन्वनोहेतिरस्मान्वृणक्तुविश्वतः । अथोयइषुधिस्तवारेअस्मन्निधे
हितं ॥ १ ॥ नमोहिरण्यबाहवेसेनान्येदिशांचपतयेनमोनमोवृक्षेभ्योहरि
केशेभ्यःपशूनांपतयेनमोनमःसस्पिंजरायत्विषीमतेपथीनांपतयेनमोन
मोबभ्लुशायविव्याधिनेन्नानांपतयेनमो नमोहरिकेशायोपवीतिनेपुष्टा
नांपतयेनमोनमोभवस्यहेत्यैजगतांपतयेनमोनमोरुद्रायाततायिनेक्षेत्रा
णांपतयेनमो नमःसूतायाहन्त्यायवनानांपतयेनमोनमोरोहितायस्थपत
येवृक्षाणांपतयेनमोनमोमंत्रिणेवाणिजायकक्षाणांपतयेनमो नमोभुवंत
येवारिवस्कृतायौषधीनांपतयेनमोनमउच्चैर्घोषायाक्रंदयतेपत्तीनांपतये
नमोनमःकृत्स्नवीतायधावतेसत्वनांपतयेनमः ॥ २ ॥ नमःसहमानायनि
व्याधिनेऽआव्याधिनीनांपतयेनमो नमःककुभायनिषंगिणेस्तेनानांपत
येनमोनमोनिषंगिणऽइषुधिमतेतस्कराणांपतयेनमो नमोवंचतेपरिवंच

तेस्तायूनांपतयेनमोनमोनिचेरवेपरिचरायारण्यानांपतयेनमो नमःसृ
काविभ्योजिघांसद्भ्योमुष्णतांपतयेनमो नमोसिमद्भ्योनक्तंचरद्भ्यःप्रकृ
तानांपतयेनमो नमउष्णीषिणेगिरिचरायकुलुंचानांपतयेनमोनमइषुम
द्भ्योधन्वाविभ्यश्चवोनमो नमआतन्वानेभ्यःप्रतिदधानेभ्यश्चवोनमोनम
आयच्छद्भ्योविसृजद्भ्यश्चवोनमोनमोस्यद्भ्योविध्यद्भ्यश्चवोनमो नमआसी
नेभ्यःशयानेभ्यश्चवोनमोनमःस्वपद्भ्योजाग्रद्भ्यश्चवोनमो नमस्तिष्ठद्भ्यो
धावद्भ्यश्चवोनमोनमःसभाभ्यःसभापतिभ्यश्चवोनमो नमोअश्वेभ्योऽश्व
पतिभ्यश्चवोनमः ॥ ३ ॥ नमआव्याधिनीभ्योविविध्यन्तीभ्यश्चवोनमो
नमउगणाभ्यस्तृंहतीभ्यश्चवोनमो नमोगृत्सेभ्योगृत्सपतिभ्यश्चवो
नमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमो नमोगणेभ्योगणपतिभ्यश्चवो
नमोनमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमो नमोमहद्भ्यःक्षुल्लकेभ्यश्चवोन

रश्मियायचनमोवास्तव्यायचवास्तुपायच ॥ ७ ॥ नमःसोमायचरुद्रा
यचनमस्ताम्रायचारुणायचनमः शंगायचपशुपतयेचनमउग्रायचभी
मायचनमोअग्रेवधायचदूरेवधायच नमोहन्त्रेचहनीयसेचनमोवृक्षेभ्यो
हरिकेशेभ्योनमस्तारायनमःशंभवेचमयोभवेच नमःशंकरायचमयस्क
रायचनमःशिवायचशिवतरायचनमस्तीर्थ्यायच कूल्यायचनमःपार्या
यचावार्यायचनमःप्रतरणायचोत्तरणायच नमआतार्यायचालाद्यायच
नमःशष्प्यायचफेन्यायचनमःसिकत्यायचप्रवाह्यायच ॥ ८ ॥ नमइरि
ण्यायचप्रपथ्यायचनमःकिꣳशिलायचक्षयणायच नमःकपर्दिनेचपुल
स्तयेचनमोगोष्ठ्यायचगृह्यायचनमस्तल्प्यायचगेह्यायचनमः काट्याय
चगह्वरेष्ठायचनमोह्रदय्यायचनिवेष्प्यायचनमःपाꣳसव्यायचरजस्या
यचनमःशुष्क्यायचहरित्यायचनमोलोप्यायचोलप्यायचनमऊर्व्याय

चसूर्म्यायचनमःपर्ण्यायचपर्णशद्यायच    नमोपगुरमाणायचाभिघ्नते
चनमआखिदतेचंप्रखिदतेच  नमोवःकिरिकेभ्योदेवानाᳪहृदयेभ्यो
नमोविक्षीणकेभ्योनमोविचिन्वत्केभ्यो  नमआनिर्हतेभ्योनमआमीवत्के
भ्यः ॥ ९ ॥ द्रापेअंधसस्पतेदरिद्रंनीललोहित । एषांपुरुषाणामेषांप
शूनांमाभेर्मारोमोएषांकिंचनाममत् । यातेरुद्रशिवातनूःशिवाविश्वाह
भेषजी ॥ शिवारुद्रस्यभेषजीतयानोमृडजीवसे ॥ इमाᳪरुद्रायतवसे
कपर्दिनेक्षयद्वीरायप्रभरामहेमतिं । यथानःशमसद्द्विपदेचतुष्पदेविश्वंपु
ष्टंग्रामेअस्मिन्ननातुरं । मृडानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसावि
धेमते । यच्छंचयोश्चमनुरायजेपितातदश्यामतवरुद्रप्रणीतौ । मानो
महांतमुतमानोअर्भकं मानउक्षंतमुतमानउक्षितं । मानोवधीःपितरंमो
तमातरंप्रियामानस्तनुवोरुद्ररीरिषः । मानस्तोकेतनयेमानआयुषिमा

रेष्मियायचनमोवास्तव्यायचवास्तुपायच ॥ ७ ॥ नमःसोमायचरुद्रा
यचनमस्ताम्रायचारुणायचनमः शंगायचपशुपतयेचनमउग्रायचभी
मायचनमोअग्रेवधायचदूरेवधायच नमोहंत्रेचहनीयसेचनमोवृक्षेभ्यो
हरिकेशेभ्योनमस्तारायनमःशंभवेचमयोभवेच नमःशंकरायचमयस्क
रायचनमःशिवायचशिवतरायचनमस्तीर्थ्यायच कूल्यायचनमःपार्या
यचावार्यायचनमःप्रतरणायचोत्तरणायच नमआतार्यायचालाद्यायच
नमःशष्प्यायचफेन्यायचनमःसिकत्यायचप्रवाह्यायच ॥ ८ ॥ नमइरि
ण्यायचप्रपथ्यायचनमःकिंशिलायचक्षयणायच नमःकपर्दिनेचपुल
स्तयेचनमोगोष्ठ्यायचगृह्यायचनमस्तल्प्यायचगेह्यायचनमः काट्याय
चगह्वरेष्ठायचनमोह्रदय्यायचनिवेष्प्यायचनमःपांसव्यायचरजस्या
यचनमःशुष्क्यायचहरित्यायचनमोलोप्यायचोलप्यायचनमऊर्व्याय

चसूर्म्याय च नमः पर्ण्याय च पर्णशद्याय च नमोऽपगुरमाणाय चाभिघ्नते
च नम आखिदते च प्रखिदते च नमो वः किरिकेभ्यो देवाना ᳫँहृदयेभ्यो
नमो विक्षीणकेभ्यो नमो विचिन्वत्केभ्यो नम आनिर्हतेभ्यो नम आमीवत्के
भ्यः ॥ ९ ॥ द्रापे अंधसस्पते दरिद्रं नीललोहित । एषां पुरुषाणामेषां प
शूनां मा भेर्मारो मो एषां किंचनाममत् । या ते रुद्र शिवा तनूः शिवा विश्वाह
भेषजी ॥ शिवा रुद्रस्य भेषजी तया नो मृड जीवसे ॥ इमा ᳫँरुद्राय तवसे
कपर्दिने क्षयद्वीराय प्रभरामहे मतिं । यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पु
ष्टं ग्रामे अस्मिन्ननातुरं । मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा वि
धेमते । यच्छं च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ । मा नो
महांतमुत मा नो अर्भकं मा न उक्षंतमुत मा न उक्षितं । मा नो वधीः पितरं मो
त मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः । मा नस्तोके तनये मा न आयुषि मा

नोगोपुमानोअश्वेंपुरीरिषः । वीरान्मानोंरुद्रभामितोवंधीर्हुविष्मंतोन
मंसाविंधेमते । आरात्तेंगोघ्नउतपूरुषघ्नेक्षयद्वींरायसुम्नमस्मेतेंअस्तु ।
रक्षांचनोअधिंचदेवब्रूह्यधांचनःशर्मंयच्छद्विबर्हाः । स्तुहिश्रुतंगंर्तस
दंयुवांनंमृगंनभीमसुंपहलुमुग्रं । मृडाजंरित्रेरुंद्रस्तवांनोअन्यंतेंअस्म
न्निवंपंतुसेनाः । परिणोरुद्रस्यहेतिर्वृंणक्तुपरिंत्वेषस्यंदुर्मतिरंघायोः ।
अवंस्थिरामघवंद्भ्यस्तनुष्वमीढ्वस्तोकायतनंयायमृडय । मीढुष्टमशि
वंतमशिवोनःसुमनांभव । परमेवृक्षआयुधंनिधायकृत्तिंवसानआचर
पिनांकंबिभ्रदागंहि । विकिंरिदुविलोंहितनमंस्तेअस्तुभगवः । यास्ते
सहस्र्ंहेतयोऽन्यमस्मन्निवंपंतुताः । सहस्राणिसहस्रधाबांहुवोस्तव
हेतयः । तासामीशानोभगवःपराचीनामुखांकृधि ॥ १० ॥ सह
स्राणिसहस्रशोयेरुद्राअधिभूम्यां । तेषांसहस्रयोजनेवधन्वांनितन्म

सि । अस्मिन्महत्यर्णवेऽन्तरिक्षेभवाअधि । नीलग्रीवाःशितिकंठाःश
र्वाअधःक्षमाचराः । नीलग्रीवाःशितिकंठादिवꣳरुद्राउपश्रिताः । येवृ
क्षेषुसस्पिंजरानीलग्रीवाविलोहिताः । येभूतानामधिपतयोविशिखासः
कपर्दिनः । येअन्नेषुविविध्यंतिपात्रेषुपिबतोजनान् । येपथांपथिरक्षय
ऐलबृदायव्युधः । येतीर्थानिप्रचरंतिसृकावंतोनिषंगिणः । यएतावंतश्च
भूयाꣳसश्चदिशोरुद्रावितस्थिरे ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्म
सि । नमोरुद्रेभ्योयेपृथिव्यांयेंतरिक्षेयेदिवियेषामन्नंवातोवर्षमिषवस्ते
भ्यो दशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्योनम
स्तेनोमृडयंतुतेयंद्विष्मोयश्चनोद्वेष्टितंवोजंभेदधामि ॥११॥ ॥ ॐ अग्ना
विष्णूसजोषसेमावर्धंतुवांगिरः । द्युम्नैर्वाजेभिरागतं । वाजश्चमेप्रस
वश्चमेप्रयतिश्चमेप्रसितिश्चमेधीतिश्चमेक्रतुश्चमे स्वरश्चमेश्लोकश्चमेश्रा

वश्चमेश्रुतिश्चमेज्योतिश्चमेसुवश्चमेप्राणश्चमेपानश्चमेव्यानश्चमेसुश्चमे
चित्तंचमआधीतंचमेवाक्चमेमनश्चमेचक्षुश्चमेश्रोत्रंचमेदक्षश्चमेबलँच
मओजश्चमेसहश्चमआयुश्चमे जराचमआत्माचमेतनूश्चमेशर्मचमेवर्म
चमेंगानिचमेस्थानिचमेपरूँषिचमेशरीराणिचमे ॥ १ ॥ ज्यैष्ठ्यं
चमआधिपत्यंचमेमन्युश्चमेभामश्चमेमश्चमेम्भश्चमेजेमाचमे महिमा
चमेवरिमाचमे प्रथिमाचमेवर्ष्माचमेद्राघुयाचमे वृद्धंचमेवृद्धिश्चमेस
त्यंचमेश्रद्धाचमेजगच्चमेधनंचमेवशश्चमे त्विषिश्चमेक्रीडाचमेमोद
श्चमेजातंचमेजनिष्यमाणंचमेसूक्तंचमेसुकृतंचमे वित्तंचमेवेद्यंचमेभू
तंचमेभविष्यच्चमेसुगंचमे सुपथंचमऋद्धंचमऋद्धिश्चमेक्लृप्तंचमेक्लृप्तिश्च
मेमतिश्चमेसुमतिश्चमे ॥ २ ॥ शंचमेमयश्चमेप्रियंचमेनुकामश्चमेकाम
श्चमेसौमनसश्चमेभद्रंचमेश्रेयश्चमेवस्यश्चमेयशश्चमे भगश्चमेद्रविणंच

मेयुंताचमेधर्ताचमेक्षेमश्चमेधृतिश्चमेविश्वंचमेमहश्चमेसंविच्चमेज्ञात्रंच
मेसूश्चमेप्रसूश्चमेसीरंचमेलयश्चमऋतंचमेमृतंचमे यक्ष्मंचमेनामयच्च
मेजीवातुश्चमेदीर्घायुत्वंचमेनमित्रंचमे भयंचमेसुखंचमेशयनंचमेसू
षाचमेसुदिनंचमे ॥ ३ ॥ ऊर्क्चमेसूनृताचमेपयश्चमेरसश्चमेघृतंचमे
मधुचमेसग्धिश्चमेसपीतिश्चमे कृषिश्चमेवृष्टिश्चमेजैत्रंचमऔद्भिद्यंचमे
रयिश्चमेरायश्चमेपुष्टंचमेपुष्टिश्चमेविभुचमेप्रभुचमेबहुचमे भूयश्चमेपू
र्णंचमेपूर्णतरंचमे क्षितिश्चमेकूयवाश्चमेन्नंचमेक्षुच्चमेव्रीहयश्चमेयवाश्च
मेमाषाश्चमेतिलाश्चमेमुद्गाश्चमेखल्वाश्चमेगोधूमाश्चमेमसुराश्चमे प्रियं
गवश्चमेणवश्चमेश्यामाकाश्चमेनीवाराश्चमे ॥ ४ ॥ अश्माचमेमृत्तिका
चमेगिरयश्चमेपर्वताश्चमेसिकताश्चमे वनस्पतयश्चमेहिरण्यंचमेयश्चमे
सीसंचमेत्रपुश्चमेश्यामंचमेलोहंचमेग्निश्चमआपश्चमे वीरुधश्चमओष

धयश्चमेकृष्टपच्यंचमेकृष्टपच्यंचमेग्राम्याश्चमे पशवआरण्याश्चयज्ञेन
कल्पंतांवित्तंचमेवित्तिश्चमेभूतंचमेभूतिश्चमे वसुचमेवसतिश्चमेकर्मच
मे शक्तिश्चमेर्थश्चमएमश्चमइतिश्चमेगतिश्चमे ॥ ५ ॥ अग्निश्चमइंद्रश्च
मेसोमश्चमइंद्रश्चमेसविताचमइंद्रश्चमे सरस्वतीचमइंद्रश्चमेपूषाचमइं
द्रश्चमेबृहस्पतिश्चमइंद्रश्चमे मित्रश्चमइंद्रश्चमेवरुणश्चमइंद्रश्चमेत्वष्टा
चमइंद्रश्चमेधाताचमइंद्रश्चमेविष्णुश्चमइंद्रश्चमेश्विनौचमइंद्रश्चमे मरु
तश्चमइंद्रश्चमेविश्वेचमेदेवाइंद्रश्चमे पृथिवीचमइंद्रश्चमेंतरिक्षंचमइंद्र
श्चमेद्यौश्चमइंद्रश्चमेदिशश्चमइंद्रश्चमेमूर्धाचमइंद्रश्चमे प्रजापतिश्चम
इंद्रश्चमे ॥६॥ अꣳशुश्चमेरश्मिश्चमेदाभ्यश्चमेधिपतिश्चमउपाꣳशुश्च
मेंतर्यामश्चमऐंद्रवायवश्चमेमैत्रावरुणश्चमआश्विनश्चमे प्रतिप्रस्थान
श्चमेशुक्रश्चमेमंथीचमआग्रयणश्चमेवैश्वदेवश्चमे ध्रुवश्चमेवैश्वानरश्चम

ऋतुग्रहाश्चमेतिग्राह्याश्चमऐन्द्राग्नश्चमेवैश्वदेवश्चमे मरुत्वतीयाश्चमेमा
हेन्द्रश्चमआदित्यश्चमे सावित्रश्चमेसारस्वतश्चमेपौष्णश्चमेपात्नीवतश्च
मेहारियोजनश्चमे ॥ ७ ॥ इध्मश्चमेबर्हिश्चमेवेदिश्चमेधिष्णियाश्चमेस्रु
चश्चमेचमसाश्चमेग्रावाणश्चमे स्वरवश्चमउपरवाश्चमेऽधिषवणेचमेद्रो
णकलशश्चमेवायव्यानिचमेपूतभृच्चमआधवनीयश्चम आग्नीध्रंचमेह
विर्धानंचमे ग्रहाश्चमेसदश्चमेपुरोडाशाश्चमेपचताश्चमेवभृथश्चमेस्वगा
कारश्चमे ॥ ८ ॥ अग्निश्चमेघर्मश्चमेर्कश्चमेसूर्यश्चमेप्राणश्चमेश्वमेधश्च
मेपृथिवीचमेऽदितिश्चमे दितिश्चमेद्यौश्चमेशक्करीरंगुलयोदिशश्चमेयज्ञे
नकल्पंतामृक्चमेसामचमेस्तोमश्चमेयजुश्चमे दीक्षाचमेतपश्चमऋतु
श्चमेव्रतंचमेहोरात्रयोर्वृष्ट्याबृहद्रथंतरेचमेयज्ञेनकल्पेतां ॥ ९ ॥ गर्भा
श्चमे वत्साश्चमेत्र्यविश्चमेत्र्यवीचमेदित्यवाट्चमेदित्यौहीचमेपंचावि

श्चमेपंचावीचमेत्रिवत्सश्चमेत्रिवत्साचमे तुर्यवाट्चमेतुर्यौहीचमेपष्ठवा
च्चमेपष्ठौहीचमउक्षाचमेवशाचमऋषभश्चमेवेहच्चमेऽनड्वान्चमेधेनुश्चम
आयुर्यज्ञेनकल्पतांप्राणोयज्ञेनकल्पतामपानोयज्ञेनकल्पतां व्यानोयज्ञे
नकल्पतांचक्षुर्यज्ञेनकल्पताᳫंश्रोत्रंयज्ञेनकल्पतां मनोयज्ञेनकल्पतांवा
ग्यज्ञेनकल्पतामात्मायज्ञेनकल्पतांयज्ञोयज्ञेनकल्पतां ॥ १० ॥ एकाच
मेतिस्रश्चमेपंचचमेसप्तचमेनवचमएकादशचमे त्रयोदशचमेपंचदश
चमेसप्तदशचमेनवदशचमएकविᳫंशतिश्चमेत्रयोविᳫंशतिश्चमे पंच
विᳫंशतिश्चमे सप्तविᳫंशतिश्चमेनवविᳫंशतिश्चमएकत्रिᳫंशच्चमेत्रय
स्त्रिᳫंशच्चमेचतस्रश्चमेष्टौचमेद्वादशचमे षोडशचमेविᳫंशतिश्चमेचतु
र्विᳫंशतिश्चमेष्टाविᳫंशतिश्चमे द्वात्रिᳫंशच्चमेषट्त्रिᳫंशच्चमेचत्वारिᳫं
शच्चमे चतुश्चत्वारिᳫंशच्चमेऽष्टाचत्वारिᳫंशच्चमेवाजश्चप्रसवश्चापिज

श्चक्रतुश्चसुवंश्च मूर्धाचव्यश्निियश्चात्यायनश्चांत्यश्चभौवनश्चभुवनश्चाधिपतिश्च ॥ ११ ॥ इडादेवहूर्मनु० ॥ ॥ ॥

## ॥ अथ देवेमंत्रप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ ॐमूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतायजातमग्निं ॥ कविꣳसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः ॥ १ ॥ मम्मत्तुनःपरिज्मावसर्हामम्मत्तुवातोअपांवृषण्वान् ॥ शिशीतमिंद्रापर्वतायुवन्नस्तन्नोविश्वेवरिवस्यंतुदेवाः ॥ २ ॥ सबुध्नादाष्टजनुपाभ्यग्रंबृहस्पतिर्देवतायस्यसम्राट् ॥ बुध्नाद्योअग्रमभ्यर्त्योजसाबृहस्पतिमाविवासंतिदेवाः ॥ ३ ॥ वायुस्ताꣳअग्रेप्रमुमोक्तुदेवःप्रजापतिःप्रजयासंविदानः ॥ प्रमुंचमानाभुवनस्यरेतोगातुंधत्तयजमानायदेवाः ॥ ४ ॥ जातंवेदोवपयागच्छदेवान्त्वꣳहिहोताप्रथमोबभूथ ॥ घृतेनत्वंतनुवोवर्ध

यस्यस्वाहाकृतंहविरदंतुदेवाः ॥ ५ ॥ शतंवर्चिनःसहस्रंचसाकंहथो
अप्रत्यसुरस्यवीरान् ॥ उतमातामहिषमन्ववेनदमीत्वाजहतिपुत्रदे
वाः ॥ ६ ॥ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेह
नाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः ॥ ७ ॥ बृहस्पतेसवित
र्बोधयैनंसंशितंचित्संतरांसंशिशाधि ॥ वर्धयैनंमहतेसौभगाय
विश्वएनमनुमदंतुदेवाः ॥ ८ ॥ यईशेअस्यद्विपदश्चतुष्पदःकस्मैदेवा
यहविषाविधेम ॥ यआत्मदाबलदायस्यविश्वउपासतेप्रशिषंयस्यदेवाः
॥ ९ ॥ येसहांसिसहसासहंतेरेजंतेअग्नेपृथिवीमखेभ्यः ॥ विश्वेदे
वाविश्वेदेवाः ॥ १० ॥ अपामतिंदुर्मतिंबाधमानारायस्पोषंयज्ञपतिमा
भजंतीसुवेधेंहियजमानायपोषमश्विनाध्वर्यूसादयतामिहत्वा ॥ अग्नेः
पुरीपमसिदेवयानीतांत्वाविश्वेअभिगृणंतुदेवाः ॥ ११ ॥ मर्माणितेवर्म

भिश्छादयामिसोमंस्त्वाराजामृतेनाभिवंस्तां ॥ उरोर्वरीयोवरीवस्तेअ
स्तुजयंतंत्वामनुमदंतुदेवाः ॥ १२ ॥ प्रजापतेस्तपसावावृधानःसद्यो
जातोदधिषेयज्ञमंग्ने ॥ स्वाहाकृतेनहविषांपुरोगायाहिसाध्याहविरंदंतु
देवाः ॥ १३ ॥ तद्ग्रहाणांग्रहत्वं ॥ देवतावाएतायजमानस्यगृहेगृह्यं
ते ॥ यद्ग्रहाः ॥ विदुरेनंदेवाः ॥ १४ ॥ तदिष्टिनामिष्टित्वं ॥ एष्टयो
हवैनाम ॥ ताइष्टयइत्याचक्षतेपरोक्षेण ॥ परोक्षंप्रियाइवहिदेवाः ॥१५॥
दशहूतोहवैनामैषः ॥ तंवाएतंदशहूतꣳसंतं ॥ दशहोतेत्याचक्षतेपरो
क्षेण ॥ परोक्षंप्रियाइवहिदेवाः ॥ १६ ॥ सप्तहूतोहवैनामैषः ॥ तंवाए
तꣳसप्तहूतꣳसंतं ॥ सप्तहोतेत्याचक्षतेपरोक्षेण ॥ परोक्षंप्रियाइवहि
देवाः ॥ १७ ॥ षड्ढूतोहवैनामैषः ॥ तंवाएतꣳषड्ढूतꣳसंतं ॥ षड्ढोतेत्या
चक्षतेपरोक्षेण ॥ परोक्षंप्रियाइवहिदेवाः ॥ १८ ॥ पंचहूतोहवैनामैषः ॥

तंवाएतंपंचहूतꣳसंतं ॥ पंचहोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रिया
इवहिदेवाः ॥ १९ ॥ चतुर्हूतोहवैनामैषः ॥ तंवाएतंचतुर्हूतꣳसंतं ॥
चतुर्होतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ २० ॥ आशिक्षं
तोनशैकिम ॥ मेदस्वतायजमानाः ॥ स्रुचाज्येनजुह्वतः ॥ अकामावोवि
श्वेदेवाः ॥ २१ ॥ नहिरुपशमविहन्नन्यमस्मात् ॥ वैश्वानरात्पुरएतारम
ग्नेः ॥ अथेममंथंनमृतममूराः ॥ वैश्वानरंक्षेत्रजित्यायदेवाः ॥ २२ ॥
उपतेगाइवाकरं ॥ वृणीष्वदुहितर्दिवः ॥ रात्रीस्तोमंनजिग्युषी ॥ देवीं
वाचमजनयंतदेवाः ॥ २३ ॥ सहिवेदयथाहविः ॥ शिवाअस्मभ्य
मोषधीः ॥ कृणोतुविश्वचर्षणिः ॥ भद्रांनःश्रेयःसमनैष्टदेवाः ॥ २४ ॥
अयंयज्ञोवर्धतांगोभिरश्वैः ॥ इयंवेदिःस्वपत्यासुवीरा ॥ इदंबर्हिरातिं
बर्हीꣳष्यन्या ॥ इमंयज्ञंविश्वेअवंतुदेवाः ॥ २५ ॥ देवंदेवायजाग्रं

विं ॥ कामिहैकाःकइमेर्पतंगाः ॥ मांथालाःकुलिपरिमापतंति ॥ अनो
वृतैनान्प्रधमंतुदेवाः ॥ २६ ॥ स्तोमैंसप्तदशेस्तुतं ॥ वैरूपेणविशौ
जेसा ॥ हविरिंद्रेवयोंदधुः ॥ शारदेनर्तुनादेवाः ॥ २७ ॥ एकविंशंशक्र
भवंःस्तुतं ॥ वैराजेनःश्रियाश्रियं ॥ हविरिंद्रेवयोंदधुः ॥ हेमंतेनर्तुना
देवाः ॥ २८ ॥ मरुतस्त्रिणवेस्तुतं ॥ बलैनशाक्वरीःसहः ॥ हविरिंद्रेव
योंदधुः ॥ शैशिरेणर्तुनादेवाः ॥ २९ ॥ आदित्यान्काममवसेहुवेम ॥
येभूतानिंजनयंतोविचिख्युः ॥ सीदंतुपुत्राआदितेरुपस्थं ॥ स्तीर्णंब
र्हिर्हविरद्यायदेवाः ॥ ३० ॥ आवृत्रहणागीर्भिर्विप्रः ॥ ब्रह्मणस्पते
त्वमस्ययंता ॥ सूक्तस्यबोधितनंयंचजिन्व ॥ विश्वंतद्भद्रंयदवंतिदेवाः
॥ ३१ ॥ नराशंसोग्नास्पातिर्नोअव्यात् ॥ आयेवामस्यसंगथेरंयी
णां ॥ प्रियादेवस्यसवितुःस्याम ॥ आनोविश्वेअस्क्रागमंतुदेवाः ॥

॥ ३२ ॥ शर्मभिषाचःशर्मुरातिषाचः ॥ शंनोदिव्याःपार्थिवाःशंनो
अप्याः ॥ येसवितुःसत्यसवस्यविश्वे ॥ मित्रस्यव्रतेवरुणस्यदेवाः ॥
॥ ३३ ॥ याश्चवैशंतीरुतप्रांसुचीर्याः ॥ यासामषाढामधुंभक्षयंति ॥
तानआपःशंऽस्योनाभवंतु ॥ तन्नोविश्वेउपंशृण्वंतुदेवाः ॥ ३४ ॥ तौ
देवेभ्यःकृणुतोदीर्घमायुः ॥ शतंऽसहस्राभेषजानिधत्तः ॥ यज्ञंनोरा
जावरुणउपयातु ॥ तन्नोविश्वेअभिसंयंतुदेवाः ॥ ३५ ॥ श्रेष्ठोदेवाना
मुलमानुषाणां ॥ तंब्राह्मणाःसोमपाःसोम्यासः ॥ प्रोष्ठपदासोअभिर
क्षंतिसर्वे ॥ चत्वारएकंमभिकर्मदेवाः ॥ ३६ ॥ लोकस्यराजामहतो
महान्हि ॥ सुगंनःपंथामभयंकृणोतु ॥ यस्मिन्नक्षत्रेयमएतिराजा ॥
यस्मिन्नेनमभ्यषिंचंतदेवाः ॥ ३७ ॥ यथादेवतमेवप्रसौति ॥ दैव्यस्य
चमानुषस्यंचव्यावृत्त्यै ॥ त्रिराह ॥ त्रिषत्याहिदेवाः ॥ ३८ ॥ यएव

देवानांꣳहविष्कृतः ॥ तानह्वयति ॥ त्रिर्ह्वयति ॥ त्रिषत्याहिदेवाः
॥ ३९ ॥ तद्ब्रह्मणंनात्यच्यवत ॥ अंतर्वेदिनिनयत्यवरुध्यै ॥ उल्मु
केनाभिगृह्णातिशृतत्वाय ॥ शृतकामाइवहिदेवाः ॥ ४० ॥ तेषांतद्भाग
धेयं ॥ तानेवतेनप्रीणाति ॥ वैश्वदेव्यर्चा ॥ एतेहिविश्वेदेवाः ॥ ४१ ॥
सद्योजातोव्यमिमीतयज्ञं ॥ अग्निर्देवानामभवत्पुरोगाः ॥ अस्यहोतुः
प्रदिश्यृतस्यवाचि ॥ स्वाहाकृतꣳहविरदंतुदेवाः ॥ ४२ ॥ आमन्वा
न्त्सोमघृतवानहिभूत्वा ॥ देवान्गच्छसुवर्विंदयजमानायमह्यं ॥ इराभू
तिःपृथिव्यैरसोमोत्क्रमीत् ॥ देवाःपितरःपितरोदेवाः ॥ ४३ ॥ यज्ञि
यायज्ञंविचयंतिशंच ॥ ओषधीरापइहशक्करीश्च ॥ योमाहृदामनसाय
चवाचा ॥ योब्रह्मणाकर्मणाद्वेष्टिदेवाः ॥ ४४ ॥ विच्छिनद्मिविधृती
भ्याꣳसपत्नान् ॥ जातान्भ्रातृव्यान्येचजनिष्यमाणाः ॥ विशोयंत्रा

भ्यांविधेमान्येनान् ॥ अहꣳस्वानामुत्तमोसानिदेवाः ॥ ४५ ॥ उषा
श्चतस्मैनिर्मुक्त ॥ सर्वंपापꣳसमूहतां ॥ योनःसपत्नोयोरणः ॥ मर्तो
भिदासंतिदेवाः ॥ ४६ ॥ अन्नंविराट् ॥ विराजैवान्नाद्यमवरुंधे ॥ त्रेधा
विभज्यदेवतांजुहोति ॥ त्र्यांवृतोवैदेवाः ॥ ४७ ॥ अस्मिन्नेवतल्लोके
कामान्दधाति ॥ तस्मादस्मिँल्लोकेबहवःकामाः ॥ त्रयाणांत्रयाणाꣳस
हवपाजुहोति ॥ त्र्यांवृतोवैदेवाः ॥ ४८ ॥ राजामहिमा ॥ यद्रूपां
महिम्नोभयतःपरियजंति ॥ यजमानमेवराज्येनोभयतःपरिगृह्णाति ॥
पुरस्तात्स्वाहाकारावाअन्येदेवाः ॥ ४९ ॥ एतद्वैतद्देवाएतांदेवतां ॥
पशुंभूतंमेधायालभंत ॥ यज्ञमेव ॥ यज्ञेनयज्ञमयजंतदेवाः ॥ ५० ॥
तेनमेतप ॥ तेनमेज्वल ॥ तेनमेदीदिहि ॥ यावद्देवाः ॥ ५१ ॥
वासोददाति ॥ तेनायुःप्रतिरते ॥ वेदितृतीयेयजेत ॥ त्रिषत्याहिदे

वाः ॥ ५२ ॥ कृशानुर्विश्वावसुः ॥ मूर्धवान्त्सूर्यवर्चाः ॥ कृतिरित्येका
दशगंधर्वगणाः ॥ देवाश्चमहादेवाः ॥ ५३ ॥ एवाहिवायो ॥ एवाहीं
द्र ॥ एवाहिपूषन् ॥ एवाहिदेवाः ॥ ५४ ॥ भुवनंदेवसूवरीः ॥ आदि
त्यानदितिंदेवीं ॥ योनिंनोर्ध्वमुदीषत ॥ भद्रंकर्णेभिःशृणुयामदेवाः
॥ ५५ ॥ उपाश्वतस्माग्निमुच्च ॥ सर्वपापꣳसमूहतां ॥ योनःसपत्नोयो
रणः ॥ मर्तोभिदासंतिदेवाः ॥ ५६ ॥ ऋतस्यपदेकवयोनिपांति ॥ अं
तःप्रविष्टंकर्तारमेतं ॥ अंतश्चंद्रमसिमनसाचरंतं ॥ सहैवसंतंनविजानं
तिदेवाः ॥ ५७ ॥ शुक्रःप्रविद्वान्प्रदिशश्चतस्रः ॥ तमेवंविद्वानमृतइह
भवति ॥ नान्यःपंथाअयनायविद्यते ॥ यज्ञेनयज्ञमयजंतदेवाः ॥५८॥
ॐराजाधिराजायप्रसह्यसाहिने ॥ नमोवयंवैश्रवणायकुर्महे ॥ समे
कामान्कामकामायमह्यं ॥ कामेश्वरोवैश्रवणोददातु ॥ कुबेरायवैश्रवणा

यं ॥ महाराजायनमः ॥ ॐस्वस्ति ॥ साम्राज्यंभौज्यंस्वाराज्यं वैराज्यं
पारमेष्ठ्यंराज्यंमाहाराज्यमाधिपत्यमयंसमंतपर्यायीस्यात् सार्वभौमः
सार्वायुषआंतादापरार्धात् ॥ पृथिव्यैसमुद्रपर्यंतायाएकराळिति ॥ तद
प्येषश्लोकोभिगीतोमरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे ॥ आविक्षि
तस्यकामप्रेर्विश्वेदेवाःसभासदइति ॥ विश्वतश्चक्षुरुतविश्वतोमुखोवि
श्वतोहस्तउतविश्वतस्पात् ॥ संबाहुभ्यांनमतिसंपतत्रैर्द्यावापृथिवीज
नयन्देवएकः ॥ योवैतांब्रह्मणोवेद ॥ अमृतेनावृतांपुरीं ॥ तस्मैब्रह्मच
ब्रह्माच ॥ आयुःकीर्तिंप्रजांददुः ॥ इति देवेमंत्राः समाप्ताः ॥ ॥

इदं पुस्तकं मुंबय्यां पांडुरंग जावजी इत्येतैः स्वीये "निर्णयसागर" ख्यमुद्रण-
यन्त्रालये मुद्रयित्वा प्रकाशितं । शाके १८५३. सन १९३२.

Publisher:—Pandurang Jawaji, } at the "Nirnaya-sagar" Press,
Printer.—Ramchandra Yesu Shedge, } 26-28, Kolbhat Lane, Bombay.

श्रीगणेशायनमः ॥ ॐमूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतायजात
मग्निं ॥कविꣳसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः ॥ १ ॥
ममत्तुनःपरिज्मावसर्हाममत्तुवातोअपांवृषण्वान् ॥ शिशीतमिंद्रापर्वता
युवंनस्तन्नोविश्वेवरिवस्यंतुदेवाः ॥ २ ॥ सबुध्नादाष्टजनुषाभ्यग्रंबृहस्प
तिर्देवतायस्यसम्राट् ॥ बुध्नाद्योअग्रमभ्यत्योजसाबृहस्पतिमाविवासं
तिदेवाः ॥ ३ ॥ वायुस्ताꣳअग्रेप्रमुंमोक्तुदेवःप्रजापतिःप्रजयासंविदा
नः ॥ प्रमुंचमानाभुवनस्यरेतोगातुंधत्तयजमानायदेवाः ॥ ४ ॥ जा
तवेदोवपयागच्छदेवान्त्वꣳहिहोताप्रथमोबभूथ ॥ घृतेनत्वंतनुवोवर्ध
यस्वस्वाहाकृतꣳहविरदंतुदेवाः ॥ ५ ॥ शतंवाचिनःसहस्रंचसाकꣳहथो
अप्रत्यसुरस्यवीरान् ॥ उत्तमातामहिषमन्ववेनदमीत्वाजहातिपुत्रदे
वाः ॥ ६ ॥ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेह

नाकंमहिमानःसचंतेयत्रपूर्वेसाध्याःसंतिदेवाः ॥ ७ ॥ बृहस्पतेसवित
र्बोधयैनꣳसꣳशितंचित्संतराꣳसꣳशिशाधि ॥ वर्धयैनंमहतेसौभगाय
विश्वएनमनुमदंतुदेवाः ॥ ८ ॥ यईशेअस्यद्विपदश्चतुष्पदःकस्मैदेवा
यहविषाविधेम ॥ यआत्मदावलदायस्यविश्वउपासंतेप्रशिषंयस्यदेवाः
॥ ९ ॥ येसहाꣳसिसहसासहंतेरेजंतेअग्नेपृथिवीमखेभ्यः ॥ विश्वेदे
वाविश्वेदेवाः ॥ १० ॥ अपामतिंदुर्मतिंबाधमानारायस्पोषेयज्ञपतिमा
भजंतीसुवर्धेहियजमानायपोषमश्विनाध्वर्यूसादयतामिहत्वा ॥ अग्नेः
पुरीषमसिदेवयानीतांत्वाविश्वेअभिगृणंतुदेवाः ॥ ११ ॥ मर्माणितेवर्मं
भिश्छादयामिसोमस्त्वाराजामृतेनाभिवस्तां ॥ उरोर्वरीयोवरिवस्तेअ
स्तुजयंतंत्वामनुमदंतुदेवाः ॥ १२ ॥ प्रजापतेस्तपसावावृधानःसद्यो
जातोदधिषेयज्ञमग्ने ॥ स्वाहाकृतेनहविषापुरोगायाहिसाध्याहविरदंतु

देवाः ॥ १३ ॥ तद्ग्रहाणांग्रहत्वं ॥ देवतावाएतायजेमानस्यगृहेगृह्यं
ते ॥ यद्ग्रहाः ॥ विदुरेनंदेवाः ॥ १४ ॥ तदिष्टीनामिष्टित्वं ॥ एष्टयो
हवैनाम ॥ ताइष्टयइत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥१५॥
दशहूतोहवैनामैषः ॥ तंवाएतंदशहूतꣳसंतं ॥ दशहोतेत्याचक्षतेपरो
क्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ १६ ॥ सप्तहूतोहवैनामैषः ॥ तंवाए
तꣳसप्तहूतꣳसंतं ॥ सप्तहोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहि
देवाः ॥ १७ ॥ षड्ढूतोहवैनामैषः ॥ तंवाएतꣳषड्ढूतꣳसंतं ॥ षड्ढोतेत्या
चक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ १८ ॥ पंचहूतोहवैनामैषः ॥
तंवाएतंपंचहूतꣳसंतं ॥ पंचहोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रिया
इवहिदेवाः ॥ १९ ॥ चतुर्हूतोहवैनामैषः ॥ तंवाएतंचतुर्हूतꣳसंतं ॥
चतुर्होतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ २० ॥ आशिक्षं

तोनशोंकिम ॥ मेदंस्वतायजंमानाः ॥ स्रुचाज्येंनजुहृतः ॥ अकामावोंवि
श्वेदेवाः ॥ २१ ॥ नहिस्पशमविंदन्नन्यमस्मात् ॥ वैश्वानरात्पुरएतारम
ग्नेः ॥ अथेममथंनमृतममूंराः ॥ वैश्वानरंक्षेत्रजित्यायदेवाः ॥ २२ ॥
उपंतेगाइवाकरं ॥ वृणीष्वदुहितर्दिवः ॥ रात्रीस्तोमंनजिग्युषीं ॥ दे
वींवाचमजनयंतदेवाः ॥ २३ ॥ सहिवेदयथाहविः ॥ शिवाअस्मभ्य
मोषधीः ॥ कृणोतुविश्वचर्षणिः ॥ भद्रांनःश्रेयःसमनैष्टदेवाः ॥ २४ ॥
अयंयज्ञोवर्धतांगोभिरश्वैः ॥ इयंवेदिःस्वपत्यासुवीरा ॥ इदंतुबर्हिरति
बर्हिंष्यन्या ॥ इमंयज्ञंविश्वेअवंतुदेवाः ॥ २५ ॥ देवंदेवायजाग्रृ
वि ॥ कामिहेकाःकइमेपतंगाः ॥ मांथालाःकुलिपरिमापतंति ॥ अन्ना
घृतेनान्प्रधमंतुदेवाः ॥ २६ ॥ स्तोमेंसप्तदशेस्तुतं ॥ वैरूपेणविशौज
सा ॥ हविरिंद्रेवयोदधुः ॥ शारदेनर्तुनादेवाः ॥ २७ ॥ एकविंशाऽ

भवंःस्तुतं ॥ वैराजेनंःश्रियाश्रियं ॥ हविरिंद्रेवयोंदधुः ॥ हेमंतेनर्तुना
देवाः ॥ २८ ॥ मरुतंस्त्रिणवेस्तुतं ॥ बलेनशाक्करीःसहः ॥ हविरिंद्रेव
योंदधुः ॥ शैशिरेणर्तुनांदेवाः ॥ २९ ॥ आदित्यान्काममवसेहुवेम ॥ ये
भूतानिंजनयंतोविचिख्युः ॥ सीदंतुपुत्राअदितेरुपस्थं ॥ स्तीर्णंबर्हिर्हवि
रद्यायदेवाः ॥ ३० ॥ आवृत्रहणागीर्भिर्विप्रः ॥ ब्रह्मणस्पतेत्वम
स्ययंता ॥ सूक्तस्यंबोधितनंयंचजिन्व ॥ विश्वंतद्भद्रंयदवंतिदेवाः
॥ ३१ ॥ नराशंसोग्नास्पतिनोंअव्यात् ॥ आयेवामस्यंसंगथेरयी
णां ॥ प्रियादेवस्यंसवितुःस्याम ॥ आनोविश्वेअस्क्रागमंतुदेवाः ॥
॥ ३२ ॥ शमंभिषाचःशमुरातिषाचः ॥ शंनोंदिव्याःपार्थिवाःशंनोअ
प्याः ॥ येसंवितुःसत्यसंवस्यविश्वे ॥ मित्रस्यंव्रतेवरुणस्यदेवाः ॥
॥ ३३ ॥ याश्चंचैशंतीरुत्तप्रांसचीयाः ॥ यासामषाढामधुंभक्षयंति ॥

तान्आपःशꣳस्योनाभवंतु ॥ तन्नोविश्वेउपशृण्वंतुदेवाः ॥ ३४ ॥ तौ
देवेभ्यःकृणुतोदीर्घमायुः ॥ शतꣳसहस्राभेषजानिधत्तः ॥ यज्ञंनोरा
जावरुणउपयातु ॥ तन्नोविश्वेअभिसंयंतुदेवाः ॥ ३५ ॥ श्रेष्ठोदेवाना
मुतमानुषाणां ॥ तंब्राह्मणाःसोमपाःसोम्यासः ॥ प्रोष्ठपदासोअभिर
क्षंतिसर्वे ॥ चत्वारएकमभिकर्मदेवाः ॥ ३६ ॥ लोकस्यराजामहतोम
हान्हि ॥ सुगंनःपंथामभयंकृणोतु ॥ यस्मिन्नक्षत्रेयमएतिराजा ॥ य
स्मिन्नेनमभ्यषिंचंतदेवाः ॥ ३७ ॥ यथादेवतमेवप्रसौति ॥ दैव्यस्य
चमानुषस्यचव्यावृत्त्यै ॥ त्रिराह ॥ त्रिषत्याहिदेवाः ॥ ३८ ॥ यए
वदेवानाꣳहविष्कृतः ॥ तान्ह्वयति ॥ त्रिर्ह्वयति ॥ त्रिषत्याहिदेवाः
॥ ३९ ॥ तद्ब्रह्मणंनात्यच्यवत ॥ अंतर्वेदिनिनयत्यवरुध्यै ॥ उल्मु
केनाभिगृह्णातिशृतत्वाय ॥ शृतकामाइवहिदेवाः ॥ ४० ॥ तेषांतद्ब्रा

गधेयं ॥ तानेवतेनप्रीणाति ॥ वैश्वदेव्यर्चा ॥ एतेहिविश्वेदेवाः ॥ ४१ ॥
सद्योजातोव्यमिमीतयज्ञं ॥ अग्निर्देवानामभवत्पुरोगाः ॥ अस्यहोतुःप्र
दिश्यृतस्यवाचि ॥ स्वाहाकृतꣳहविरदंतुदेवाः ॥ ४२ ॥ आत्मन्वान्त्सो
मघृतवान्हिभूत्वा ॥ देवान्गच्छसुवर्विंदयजमानायमह्यं ॥ इराभू
तिःपृथिव्यैरसोमोत्क्रमीत् ॥ देवाःपितरःपितरोदेवाः ॥ ४३ ॥ यज्ञि
यायज्ञंविचयंतिशंच ॥ ओषधीरापइहशक्वरीश्च ॥ योमाहृदामनसाय
श्ववाचा ॥ योब्रह्मणाकर्मणाद्वेष्टिदेवाः ॥ ४४ ॥ विच्छिनद्मिविधृती
भ्याꣳसपत्नान् ॥ जातान्भ्रातृव्यान्येचजनिष्यमाणाः ॥ विशोयंत्रा
भ्यांविधमाम्येनान् ॥ अहꣳस्वानामुत्तमोसानिदेवाः ॥ ४५ ॥ उषा
श्चतस्मैनिर्मुक्तं ॥ सर्वंपापꣳसमूहतां ॥ योनःसपत्नोयोरणः ॥ मर्तोभि
दासंतिदेवाः ॥ ४६ ॥ अन्नंविराट् ॥ विराजैवान्नाद्यमवरुंधे ॥ त्रेधा

विभज्यंदेवतांजुहोति ॥ व्यावृत्तोवैदेवाः ॥ ४७॥ अस्मिन्नेवतल्लोकेका
मान्दधाति ॥ तस्मादस्मिँल्लोकेबहवःकामाः ॥ त्रयाणांत्रयाणाᳪंसहव
पांजुहोति ॥ व्यावृत्तोवैदेवाः ॥ ४८ ॥ राजामहिमा ॥ यद्रूपांमहि
म्नोभयतःपरियजंति ॥ यजमानमेवराज्येनोभयतःपरिगृह्णाति ॥ पुर
स्तात्स्वाहाकारावाअन्येदेवाः ॥ ४९ ॥ एतद्वैतद्देवाएतांदेवतां ॥ पशुं
भूतंमेधायालभंत ॥ यज्ञमेव ॥ यज्ञेनंयज्ञमयजंतदेवाः ॥ ५० ॥ तेनं
मेतप ॥ तेनंमेज्वल ॥ तेनंमेदीदिहि ॥ यावद्देवाः ॥ ५१ ॥ वासो
ददाति ॥ तेनायुःप्रतिरते ॥ वेदितृतीयेयजेत ॥ त्रिषत्याहि
देवाः ॥ ५२ ॥ कृशानुर्विश्वावसुः ॥ मूर्धन्वान्सूर्यवर्चाः ॥ कृतिरित्ये
कादशगंधर्वगणाः ॥ देवाश्चमहादेवाः ॥ ५३ ॥ एवाहिवायो ॥ ए
वाहींद्र ॥ एवाहिपूषन् ॥ एवाहिदेवाः ॥ ५४ ॥ भुवनंदेवसूवरीः ॥

आदित्यानदितिंदेवीं ॥ योनिनोर्ध्वमुदीषंत ॥ भद्रंकर्णेभिःश्रृणुयामदे
वाः ॥ ५५ ॥ उषाश्चतस्मान्निमुंक्तं ॥ सर्वंपापऽंसमूंहतां ॥ योनंःसपत्नो
योरणः ॥ मर्तोभिदासंतिदेवाः ॥ ५६ ॥ ऋतस्यपदेकवयोनिपांति ॥ अं
तःप्रविष्टंकर्तारमेतं ॥ अंतश्चंद्रमंसिमनंसाचरंतं ॥ सहैवसंतंनविजा
नंतिदेवाः ॥ ५७ ॥ शुक्रःप्रविद्वान्प्रदिशश्चतंस्रः ॥ तमेवंविद्वानमृतइह
भवति ॥ नान्यःपंथाअयनायविद्यते ॥ यज्ञेनंयज्ञमंयजंतदेवाः ॥ ५८ ॥
ॐराजाधिराजायप्रसह्यसाहिने ॥ नमोवयंवैश्रवणायकुर्महे ॥ समे
कामान्कामकामांयमह्यं ॥ कामेश्वरोवैश्रवणोददातु ॥ कुबेरायवैश्रव
णाय ॥ महाराजायनमः ॥ ॐस्वस्ति ॥ साम्राज्यंभौज्यंस्वाराज्यं वैरा-
ज्यंपारमेष्ठ्यंराज्यंमाहाराज्यमाधिपत्यमयंसमंतपर्यायीस्यात् सार्वभौमः
सार्वायुषआंतादापरार्धात् ॥ पृथिव्यैसमुद्रपर्यंतायाएकराळिति ॥

तदप्येषश्लोकोभिगीतोमरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे ॥ आवि
क्षितस्यकामप्रेर्विश्वेदेवाःसभासदइति ॥ विश्वतंश्चक्षुरुतविश्वतोमु
खोविश्वतोंहस्तउतविश्वतंस्पात् ॥ संबाहुभ्यांनमंतिसंपतत्रैर्द्यावापृथि
वीजनयंन्देवएकः ॥ योवैतांब्रह्मणोवेद ॥ अमृतेनावृतांपुरीं ॥ तस्मैब्र
ह्मचब्रह्माच ॥ आयुःकीर्तिंप्रजांददुः ॥ इति देवेमंत्राः समाप्ताः ॥ ॥

---

इदं पुस्तकं मुम्बय्यां पाण्डुरङ्ग जावजी इत्येतैः स्वीये 'निर्णयसागराख्य' मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् ॥ शाकः १८५२, सनाब्दः १९३०.

Published by Pandurang Jawaji, At the Nirnaya-sagar Press,
Printed by Ramchandra Yesu Shedge, 26-28, Kolbhat Lane, Bombay.

॥ इति हिरण्यकेशी देवे समाप्ताः ॥

# अथ ऋग्वेदीया त्रिकालसंध्या ॥

किंमत १॥ आणा.

श्रीगणेशाय नमः ॥ अथभस्मधारणविधिः ॥ आचम्य प्राणायामं
कृत्वा ॥ अद्येत्यादिपूर्वो० शरीरशुद्ध्यर्थं भस्मधारणमहं करिष्ये। ॐमान
स्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्र
भामितोवंधीर्हविष्मंतःसदमित्वाहवामहे ॥ ( इति हस्ते भस्म गृहीत्वा
जलमिश्रितं कृत्वा)॥ॐईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधि
पतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ शिरसि ॥ ॐतत्पु
रुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ मुखे ॥
ॐअघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्ते
अस्तुरुद्ररूपेभ्यः ॥ हृदये॥ॐवामदेवायनमोज्येष्ठायनमःश्रेष्ठायनमोरु
द्रायनमःकालायनमःकलविकरणायनमोबलविकरणायनमोबलायन
मोबलप्रमथनायनमःसर्वभूतदमनायनमोमनोन्मनायनमः ॥ गुह्ये ॥

ॐसद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः॥भवेभवेनातिभवेभवस्व मां भवोद्भवायनमः ॥ पादयोः ॥ अग्निरिति भस्म । वायुरिति भस्म । जलमिति भस्म । स्थलमिति भस्म । व्योमेति भस्म । सर्वं९ हवा इदं भस्म । मन एतानि चक्षूंषि भस्मानि ॥ तच्च ॥ ॐनमः शिवाय इति त्रिवारोच्चारितेन सर्वाङ्गं विलिप्य आचामेत् ॥

श्रीगणेशाय नमः ॥ ॥ अथ प्रातःसंध्याप्रारंभः ॥ केशवाय नमः । नारायणाय नमः । माधवाय नमः । गोविंदाय नमः । विष्णवे नमः । मधुसूदनाय नमः। त्रिविक्रमाय नमः । वामनाय नमः । श्रीधराय नमः। हृषीकेशाय नमः । पद्मनाभाय नमः । दामोदराय नमः । संकर्षणाय नमः । वासुदेवाय नमः । प्रद्युम्नाय नमः । अनिरुद्धाय नमः । पुरुषोत्तमाय नमः । अधोक्षजाय नमः । नारसिंहाय नमः । अच्युताय

नमः । जनार्दनाय नमः । उपेंद्राय नमः । हरये नमः । श्रीकृष्णाय नमः । प्रणवस्य परब्रह्म ऋषिः । परमात्मा देवता । दैवीगायत्री छंदः । सप्तानां व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगोतमात्रिवसिष्ठकश्यपा ऋषयः । अग्निवाय्वादित्यबृहस्पतिवरुणेंद्रविश्वेदेवा देवताः । गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुप्जगत्यश्छंदांसि । गायत्र्या विश्वामित्र ऋषिः । सविता देवता । गायत्री छंदः । गायत्रीशिरसः प्रजापतिर्ऋषिः । ब्रह्माग्निवाय्वादित्या देवताः। यजुश्छंदः । प्राणायामे विनियोगः ॥ ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ॐआपोज्योतीरसोमृतंब्रह्मभूर्भुवःस्वरोम् ॥ ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःसंध्यामुपासिष्ये । आपोहिष्ठेति तृचस्यां

वरीपः सिंधुद्वीप ऋषिः । आपो देवता गायत्री छंदः । मार्जने विनि-
योगः॥ ॐआपोहिष्ठामयोभुवः॥तानंऊर्जेदधातन॥महेरणायचक्षसे ॥
योवःशिवतमोरसः॥तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअ
रंगमामवः॥यस्यक्षयायजिन्वंथ ॥ आपोजनयथाचनः ॥ सूर्यश्चेति मं-
त्रस्य याज्ञवल्क्य उपनिषद ऋषिः । सूर्यमन्युमन्युपतिरात्रिश्च देव-
ताः । प्रकृतिश्छंदः । मंत्राचमने विनियोगः ॥ ॐसूर्यश्चमामन्यु-
श्चमन्युपतयश्चमन्युकृतेभ्यः ॥ पापेभ्योरक्षंताम् ॥ यद्रात्र्यापापंम
कार्षं ॥ मनसावाचाहस्ताभ्यां ॥ पद्भ्यामुदरेणशिश्ना ॥ रात्रिस्तदव
लुंपतु ॥ यत्किंचदुरितंमयि ॥ इदमहंमाममृतयोनौ ॥ सूर्येज्योतिषिजु
होमिस्वाहा ॥ इति जलं पीत्वा आचम्य ॥ आपोहिष्ठेति नवर्चस्य
सूक्तस्यांवरीपः सिंधुद्वीप आपो गायत्री । पंचमी वर्धमाना सप्तमी

प्रतिष्ठा अंत्ये द्वे अनुष्टुभौ ॥ मार्जने विनियोगः ॥ ॐआपोहिष्ठेति
ऋक्त्रयम् ॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्त्रवंतु
नः ॥ ईशानावार्याणांक्षयंतीश्चर्षणीनाम् ॥ अपोयाचामिभेषजम् ॥
अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा ॥ अग्निंचविश्वशंभुवम् ॥ आ-
पःपृणीतभेषजंवरूथंतन्वे३ममं ॥ ज्योक्चसूर्यंदृशे ॥ इदमापःप्रवह
तयत्किंचदुरितंमयि ॥ यद्वाहमभिदुद्रोहयद्वाशेपउतानृतम् ॥ आपोअ
द्यान्वचारिषंरसेनसमगस्महि ॥ पयस्वानग्नआगहितंमासंसृजवर्चसा ॥
(ससुपीस्तदपसोदिवानक्तंचससुपीः॥ वरेण्यक्रतूरहमादेवीरवसेहुवे॥)
ऋतंचेति तृचस्य सूक्तस्य माधुच्छंदसोऽघमर्पण ऋपिः । भाववृत्ति-
र्देवता । अनुष्टुप् छंदः । अघमर्पणे विनियोगः ॥ ॐऋतंचसत्यं
चाभीद्धात्तपसोध्यजायत ॥ ततोरात्र्यजायतततःसमुद्रोअर्णवः ॥ स

मुद्रादर्णवादधिसंवत्सरोअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचांतरिक्षमथोस्वः ॥ दक्षिणनासया पापपुरुषं निरस्य तज्जलं नावलोक्य वामभागे क्षितौ क्षिपेत् । आचम्य ॥ गायत्र्या विश्वामित्रः सविता गायत्री । श्रीसूर्यायार्घ्यदाने विनियोगः ॥ ॐभूर्भुवःस्वः तत्सवितुर्व० श्रीसवितृसूर्यनारायणाय इदमर्घ्यं दत्तं न मम ॥ इति त्रिः । आचम्य प्राणायामं कृत्वा ॥ पृथ्वीति मंत्रस्य मेरुपृष्ठऋषिः ॥ कूर्मो देवता । सुतलं छंदः । आसने विनियोगः ॥ ॐपृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ त्वं च धारय मां देवि पवित्रं कुरु चासनम् । ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभक्षणे ॥ तिष्ठ देवि शिखाबंधे चामुंडे ह्यपराजिते ॥ अपसर्पंतु ते भूता ये भूता भूमिसंस्थि-

ताः ॥ ये भूता विघ्नकर्तारस्ते गच्छंतु शिवाज्ञया ॥ अपक्रामंतु भूतानि पिशाचाः सर्वतोदिशम् ॥ सर्वेषामविरोधेन ब्रह्मकर्म समारभे ॥ गायत्र्या विश्वामित्र ऋषिः। सविता देवता। गायत्री छंदः। न्यासे विनियोगः। ॐतत्सवितुर्हृदयाय नमः। वरेण्यं शिरसे स्वाहा। भर्गोदेवस्य शिखायै वषट्। धीमहि कवचाय हुम्। धियोयोनो नेत्रत्रयाय वौषट्। प्रचोदयात् अस्त्राय फट्। इति दिग्बंधः ॥ बालां बालादित्यमंडलमध्यस्थां रक्तवर्णां रक्तांबरानुलेपनस्रगाभरणां चतुर्वक्त्रां दंडकमंडल्वक्षसूत्राभयांकचतुर्भुजां हंसासनारूढां ब्रह्मदैवत्यामृग्वेदमुदाहरंतीं भूर्लोकाधिष्ठात्रीं गायत्रीं नाम देवतां ध्यायामि ॥ आगच्छ वरदे देवि जपे मे संनिधौ भव ॥ गायंतं त्रायसे यस्माद्गायत्री त्वं ततः स्मृता ॥ गायत्री जपमहं करिष्ये ॥ अष्टोत्तरशतमष्टाविंश

तिर्दशवारं वा गायत्रीं जप्त्वा ॥ पुनः तत्सवितुरिति षडंगन्यासं कृत्वा उपस्थानं कुर्यात् ॥ जातवेदसे मारीचः कश्यपो जातवेदा अग्निस्त्रिष्टुप् ॥ उपस्थाने विनियोगः ॥ ॐजातवेदसेसुनवामसोमंमरातीयतोनिर्दहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥ मित्रोजनानिति नवर्चस्य सूक्तस्य गाथिनो विश्वामित्रः सविता त्रिष्टुप् अंत्याश्चतस्रो गायत्र्यः सूर्योपस्थाने विनियोगः ॥ ॐमित्रोजनान्यातयतिब्रुवाणोमित्रोदाधारपृथिवीमुतद्यां ॥ मित्रःकृष्टीरनिमिषाभिचष्टेमित्रायहव्यंघृतवज्जुहोत ॥ प्रसमित्रमर्तोअस्तुप्रयस्वान्यस्तआदित्यशिक्षतिव्रतेन ॥ नहन्यतेनजीयतेत्वोतोनैनमंहोअश्नोत्यंतितोनदूरात् ॥ अनमीवासइळयामदंतोमितज्ञवोवरिमन्नापृथिव्याः ॥ आदित्यस्यव्रतमुपक्षियंतोवयंमित्रस्यसुमतौस्याम ॥ अयंमित्रोनमस्यःसुशे

वोराजासुक्षत्रोअंजनिष्टवेधाः ॥ तस्यवयंसुमतौयज्ञियस्यापिभद्रेसौम
नसेस्याम ॥ महाँआदित्योनमसोपसद्योयातयज्ञनोगृणतेसुशेवः ॥
तस्माएतत्पन्यतमायजुष्टमग्नौमित्रायहविराजुहोत ॥ मित्रस्यचर्षणी
धृतोऽवोदेवस्यसानसि ॥ द्युम्नंचित्रश्रवस्तमम् ॥ अभियोमहिनादिवं
मित्रोबभूवसप्रथाः ॥ अभिश्रवोभिःपृथिवीम् ॥ मित्रायपंचयेमिरेज
नाअभिष्टिशवसे ॥ सदेवान्विश्वान्बिभर्ति ॥ मित्रोदेवेष्वायुषुजनायवृ
क्तबर्हिषे ॥ इषइष्टव्रताअकः ॥ त्र्यंबकं मैत्रावरुणिर्वसिष्ठो रुद्रोऽनु-
ष्टुप् । उपस्थाने विनियोगः ॥ ॐत्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनम् ॥
उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ तच्छंयोः शंयुर्विश्वेदेवाः
शक्वरी । उपस्थाने विनियोगः ॥ ॐतच्छंयोरावृणीमहेगातुंयज्ञायगा-
तुंयज्ञपतयेदैवीस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुभेष-

जप्म् ॥ शंनोअस्तुद्विपदेशंचतुष्पदे ॥ नमो ब्रह्मणे प्रजापतिर्विश्वेदेवा जगती । उपस्थाने विनियोगः ॥ ॐनमोब्रह्मणेनमोअस्त्वग्नयेनमः पृथिव्यैनमओषधीभ्यः ॥ नमोवाचेनमोवाचस्पतयेनमो विष्णवेमहतेकरोमि ॥ प्राच्यै दिशे इंद्राय च नमः । आग्नेय्यै दिशे अग्नये च नमः । दक्षिणस्यै दिशे यमाय च नमः । नैर्ऋत्यै दिशे निर्ऋतये च नमः । प्रतीच्यै दिशे वरुणाय च नमः । वायव्यै दिशे वायवे च नमः । उदीच्यै दिशे सोमाय च नमः। ईशान्यै दिशे ईश्वराय च नमः । ऊर्ध्वायै दिशे ब्रह्मणे च नमः । अधरस्यै दिशे अनंताय च नमः। संध्यायै नमः। गायत्र्यै नमः। सावित्र्यै नमः । सरस्वत्यै नमः । सर्वाभ्यो देवताभ्यो नमः ॥ यां सदा सर्वभूतानि स्थावराणि चराणि च ॥ सायं प्रातर्नमस्यंति सा मा संध्याऽभिरक्षतु ॥ अमुक

गोत्रामुकप्रवरोत्पन्नोऽहममुकशर्मा भो गुरो त्वामभिवादयामि ॥
उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि ॥ ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ
देवि यथासुखम् ॥ भद्रंनोअपिवातयमनः ॥ ॐशांतिःशांतिःशांतिः ॥
प्रदक्षिणं परिभ्रमन् । आसत्यलोकादापातालादालोकालोकपर्वतात् ॥
ये संति ब्राह्मणा देवास्तेभ्यो नित्यं नमो नमः ॥ इति गुरूनभिवा-
दयेत् । अनेन प्रातःसंध्यावंदनेन कर्मणा श्रीपरमेश्वरः प्रीयतां ॥
ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ ॥ ॥ ॥
श्रीगणेशाय नमः ॥ आचम्य प्राणानायम्य ॥ ममोपात्तदुरितक्षय-
द्वारा श्रीपरमेश्वरप्रीत्यर्थं मध्याह्नसंध्यामुपासिष्ये ॥ आपोहिष्ठेति
तृचेन पूर्ववत्प्रथमं मार्जनं कृत्वा मंत्राचमनं कार्यं ॥ आपः पुनं-
त्वित्यस्यानुवाकस्य नारायण आपो अष्टिः मंत्राचमने विनियोगः ॥

ॐ आपः पुनंतुपृथिवींपृथिवीपूतापुंनातुमां ॥ पुनंतुब्रह्मणस्पतिर्ब्रह्म पूतापुंनातुमां ॥ यदुच्छिष्टमभोज्यंयद्वादुश्चरितंमम ॥ सर्वंपुनंतुमामापोसतांचप्रतिग्रहुंस्वाहा ॥ इति अपः पीत्वा । आचम्य प्रातःसंध्यावत् द्वितीयं मार्जनं अघमर्षणांतं कृत्वा ॥ हंसःशुचिषदिति मंत्रस्य गोतमो वामदेवः सूर्यो जगती ॥ अर्घ्यदाने विनियोगः ॥ ॐहंसः शुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतं ॥ श्रीसूर्याय इदमर्घ्यं दत्तं न मम ॥ आत्मानं परिषिच्य द्विराचम्य ॥ ऊर्ध्वबाहुरुन्मुखःसूर्यमुपतिष्ठेत ॥ उदुत्यमिति त्रयोदशर्चस्य सूक्तस्य काण्वः प्रस्कण्व ऋषिः श्रीसूर्यो देवता नवाद्या गायत्र्यः अंत्याश्चतस्रोनुष्टुभः ॥ चित्रं देवानामिति षडृचस्य सूक्तस्य आंगिरसः कुत्सः सूर्यस्त्रिष्टुप् सूर्योपस्थाने

विनियोगः ॥ ॐउदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥
अपत्येतायवोयथानक्षत्रायंत्यक्तुभिः ॥ सूरायविश्वचंक्षसे ॥ अदृश्रम
स्यकेतवोविरश्मयोजनाँअनु ॥ भ्राजंतोअग्नयोयथा ॥ तरणिर्विश्वद
र्शतोज्योतिष्कृदसिसूर्य ॥ विश्वमाभासिरोचनं ॥ प्रत्यङ्देवानांविशः
प्रत्यङ्ङुदेपिमानुषान् ॥ प्रत्यङ्विश्वंस्वर्दृशे ॥ १ ॥ येनापावकचक्ष
साभुरण्यंतंजनाँअनु ॥ त्वंवरुणपश्यसि ॥ विद्यामेषिरजस्पृथ्वहामि
मानोअक्तुभिः ॥ पश्यन्जन्मानिसूर्य ॥ सप्तत्वाहरितोरथेवहंतिदेव
सूर्य ॥ शोचिष्केशंविचक्षण ॥ अयुक्तसप्तशुंध्युवःसूरोरथस्यनप्त्यः ॥
ताभिर्यातिस्वयुक्तिभिः ॥ उद्वयंतमसस्परिज्योतिष्पश्यंतउत्तरं ॥ देवं
देवत्रासूर्यमगन्मज्योतिरुत्तमं ॥ उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवं ॥
हृद्रोगंममसूर्यहरिमाणंचनाशय ॥ शुकेषुमेहरिमाणंरोपणाकासुदध्म

सि ॥ अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ॥ उदगादयमादित्योवि
श्वेनसहंसासह ॥ द्विषंतंमह्यंरंधयन्मोअहंद्विषतेरधं ॥ २ ॥ चित्रंदेवा
नामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरि
क्षंसूर्यआत्माजगतस्तस्थुषश्च ॥ सूर्योदेवीमुषसंरोचमानांमर्योनयोषा
मभ्येतिपश्चात् ॥ यत्रानरोदेवयंतोयुगानिवितन्वतेप्रतिभद्रायभद्रं ॥
भद्राअश्वाहरितःसूर्यस्यचित्राएतग्वाअनुमाद्यासः ॥ नमस्यंतोदिवआ
पृष्ठमस्थुःपरिद्यावापृथिवीयंतिसद्यः ॥ तत्सूर्यस्यदेवत्वंतन्महित्वंमध्या
कर्तोविततंसंजभार ॥ यदेदयुक्तहरितःसधस्थादाद्रात्रीवासस्तनुतेसि
मस्मै ॥ तन्मित्रस्यवरुणस्याभिचक्षेसूर्योरूपंकृणुतेद्योरुपस्थे ॥ अनंत
मन्यद्रुशदस्यपाजःकृष्णमन्यद्धरितःसंभरंति ॥ अद्यादेवाउदितासूर्य
स्यनिरंहसःपिपृतानिरवद्यात् ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिं

धुःपृथिवीउतद्यौः ॥ ३ ॥ इत्युपस्थाय उपविश्याचम्य प्राणायामं कृत्वा ॥ युवतीं युवादित्यमंडलमध्यस्थां श्वेतवर्णां श्वेतांवरानुलेपनस्रगाभरणां चतुर्वक्त्रां प्रतिवक्त्रंत्रिनेत्रां चंद्रशेखरां त्रिशूलखड्गखट्वांगडमरुकचतुर्भुजां वृषभासनारूढां रुद्रदैवत्यां यजुर्वेदमुदाहरंतीं भुवर्लोकाधिष्ठात्रीं नामदेवतां ध्यात्वा संपूज्य यथाशक्ति जपं कुर्यात् ॥ अन्यत् प्रातःसंध्यावत् ॥ इति मध्याह्नसंध्या ॥ ॥

श्रीगणेशाय नमः ॥ अथ सायंसंध्याप्रारंभः॥ प्रातःकालवदाचमनं प्राणायामं च कुर्यात् ॥ सायंसंध्या वृद्धा कृष्णा कृष्णवर्णा कृष्णवस्त्रा कृष्णगंधा कृष्णमाल्यानुलेपना गरुडवाहना विष्णुदैवत्या आहवानीयाग्न्युपस्थाना सामवेदसंहिता तृतीया विष्णुसंध्या सत्यवती नाम्नी ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायंसंध्योपास्तिं

करिष्ये ॥ ततः प्रथममार्जनपर्यंतं प्रातःकालवत् ॥ अग्निश्चेति मंत्रस्य ॥ याज्ञवल्क्य उपनिषद् ऋषिः ॥ अग्निमन्युमन्युपतयोऽहश्च देवताः ॥ प्रकृतिश्छंदः ॥ मंत्राचमने विनियोगः ॥ ॐअग्निश्चमामन्यु श्चमन्युपतयश्चमन्युंकृतेभ्यः ॥ पापेभ्योरक्षंताम् ॥ यदह्नापापमकार्षं ॥ मनसावाचाहस्ताभ्यां ॥ पद्भ्यामुदरेणशिश्ना ॥ अहस्तदवलुंपतु ॥ यत्किं चदुरितंमयि ॥ इदमहंमाममृतयोनौ ॥ सत्येज्योतिषिजुहोमिस्वाहा ॥ आचम्य० ॥ प्रातःकालवदापोहिष्ठेति नवर्गिभर्मार्जनं कृत्वा ॥ तथा गा यत्रीमंत्रेण वरुणाय त्रिवारमर्घ्यं दत्वा ॥ असावादित्यो ब्रह्म ॥ द्विरा चमनं प्राणायामं च कृत्वा ॥ प्रातःकालवत् दिग्बंधासनं षडंगं तथा च गायत्रीजपः ॥ पुनश्च षडंगं कृत्वा यच्चिद्धितेइति दशर्चामाजीग र्तिःशुनःशेपःसकृत्रिमो वैश्वामित्रो देवरात ऋषिः वरुणो देवता गाय

त्रीछंदः वरुणोपस्थाने वि० ॥ ॐ यच्चिद्धिते विशो यथा प्रदेव वरुण व्रतं ॥
मिनीमसि द्यविद्यवि ॥ मानो वधाय हत्नवे जिहीळानस्य रीरधः ॥ माहृ
णानस्य मन्यवे ॥ विमृळीकाय ते मनो रथीरश्वं न संदितं ॥ गीर्भिर्वरुण
सीमहि ॥ परा हि मे विमन्यवः पतंति वस्य इष्टये ॥ वयो न वसतीरुप ॥ क
दाक्षत्रश्रियं नरमा वरुणं करामहे ॥ मृळीकायोरुचक्षसं ॥ १ ॥ तदित्स
मानमाशाते वेनंता न प्रयुच्छतः ॥ धृतव्रताय दाशुषे ॥ वेदा यो वीनां पद
मंतरिक्षेण पततां ॥ वेद नावः समुद्रियः ॥ वेद मासो धृतव्रतो द्वादश प्र
जावतः ॥ वेदा य उपजायते ॥ वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः ॥
वेदा ये अध्यासते ॥ निषसाद धृतव्रतो वरुणः पस्त्यास्वा ॥ साम्राज्या
य सुक्रतुः ॥ यांसदास० इतः प्रातःकालसंध्यावत् ॥ इति सायंसंध्या ॥

इदं पुस्तकं पांडुरंग जावजी इत्येतैः तीये निर्णयसागरमुद्रणालये
मुद्रयित्वा प्रकाशितम्, शाके १८५२ सन १९३०.

## ॥ इति ऋग्वेदीया त्रिकालसंध्या ॥

पब्लिशर–पाडुरंग जावजी, } निर्णयसागर प्रेस,
प्रिन्टर–रामचंद्र येसू शेडगे. } नं० २६।२८ कोलभाट लेन, मुंबई.